श्रीमते रामानुजाय नमः ॥

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

श्रीमद्रामानुजं वन्दे रङ्गसूरिञ्च सद्गुरुम् ।

सुदर्शनगुरुञ्चैव गोपालार्यञ्च मद्गुरुम् ॥

# हवनपद्धतिः प्रारम्भः

प्रारम्भमा आसनमाबसी आचमनगरेर तलकामन्त्रले तामा या पित्तलकापात्रमा कर्मपात्रनिर्माण गर्ने–

कर्मपात्रमा शङ्खचक्र लेखेर पात्रमा अभिमन्त्रणगर्ने–

ॐ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्व गूँ हसः । शु.य.२० । १४

ॐ यदिदिवा यदिनक्तमेना गूँ सि चकृमाव्वयम् ।
व्वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्व गूँ हसः ॥ शु.य.२० । १५

ॐ यदि जाग्रद्यदिस्वप्नएना गूँ सि च कृमाव्वयम् ।
सूर्य्योमा तस्मादेनसो विश्वान् मुञ्चत्व गूँ हसः ॥ शु.य.२० । १६

कर्मपात्रमा पवित्रराख्ने–

ॐ पवित्रेस्थोव्वैष्णव्यौसवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्यरश्मिभिः । शु.य.१० । ६

तस्यते पवित्रपते पवित्रपूतस्ययत्कामः पुने तच्छकेयम् ॥

कर्मपात्रमा जलराख्ने–

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये। शंय्योरभिस्रवन्तु नः ।

शु.य.३६।१२

चन्दन राख्ने–

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।

ईश्वरी सर्वभूतानां तामिहोपह्वये श्रियम्॥ श्रीसूक्तम्

तिल राख्ने–

ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्क्नमद्भिः पृक्तः स्वधया पितृँल्लोकान् प्प्रीणाहिनः स्वाहा॥

जौ राख्ने–

ॐयवोसियवयास्मद्द्वेषोयवयारातिःद्दिवेत्वान्तरिक्षायत्वा

पृथिव्यैत्वाशुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि॥

अक्षता राख्ने–

ॐ अक्षन्नमीमदन्तह्यवप्रियाऽदअधूषत। अस्तोषतस्वभानवो व्विप्प्रानविष्ठयामतीयोजान्विन्द्रते हरी॥ शु.य.३।५१

पुष्प राख्ने–

ॐ श्रीश्चते लक्ष्मीश्चपत्क्न्यावहोरात्त्रेपार्श्वेनक्षत्त्राणि रूप मश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण॥

शु.य.३१।२२

अब अभिमन्त्रितजलले यज्ञीयद्रव्य एवं यजमानलाई अभिषेक गर्ने–

ॐ अपवित्र पवित्रो वा सर्वावस्थाङ्गतोपि वा।

यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

ॐपुण्डरीकाक्ष पुनातु ३ ।

पञ्चगव्य विधानम् –

अब वेदीको पूर्व दिशामा चामलआदिलेचतुरस्र स्थण्डिलबनाउने र कुंकुमआदिले पाँचकोठा बनाएर **पूर्वमा एक**पलागोमूत्र । **दक्षिणमा** अंगुष्ठार्ध गोवर । **पश्चिममा** सातपला गाइको दुध । **उत्तरमा तीन** पला गाइकोदही । **बीचमा** एकपला गाइको घीउ । **ईशानमा** एकपला कुशोदक राखेर–

१. गोमूत्रमा **विष्णु**लाइ आवाहनगरी पूजनगर्ने–

ॐ विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्थोव्विष्णोःस्यूरसिव्विष्णो
र्ध्रुवोसिव्वैष्णवमसिव्विष्णवे त्वा ॥ शु.य. ५ । २१

ॐ विष्णवे नमः **विष्णुम्** आवाहयामि स्थापयामि पूजयामि भनेर पूजागर्ने ।

२. गोबरमा **ब्रह्मा**लाइ आवाहनगरी पूजागर्ने–

ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतःसुरुचोव्वेनऽआवः । सबुध्न्या
ऽउपमाऽअस्यव्विष्ठाःसतश्चयोनिमसतश्चव्विवः । शु.य.१३ । ३

ॐ ब्रह्मणे नमः **ब्रह्माणम्** आवाहयामि स्थापयामि पूजयामि भनेर पूजागर्ने ।

३. दुधमा **अच्युत**लाइ आवाहनगरी पूजागर्ने–

ॐ विष्णोर्न्नुकंव्वीर्य्याणिप्प्रवोचंय्यःपार्थिवानिव्विममेरजा गूँ सि ।
योऽअस्कभायदुत्तर गूँसधस्थंव्विचक्रमाणस्त्रेधोरुगायोव्विष्णवेत्त्वा ।
शु.य.५ । १०

ॐ अच्युताय नमः अच्युतमावाहयामि स्थापयामि पूजयामि भनेर पूजागर्ने ।

४. दहीमा **शुक्र**लाइ आवाहनगरी पूजागर्ने–

ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियंविपान गूँ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयो मृतं मधु॥ शु.य.१९। ७५

ॐ शुक्राय नमः शुक्रमावाहयामि स्थापयामि पूजयामि भनेर पूजागर्ने।

५. घीउमा **श्रीकृष्ण**लाइ आवाहनगरी पूजागर्ने–

ॐ कृष्णोस्याखरेष्ठोग्नयेत्वाजुष्टम्प्रोक्षामिव्वेदिरसिबर्हिषेत्वा जुष्टम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टम्प्रोक्षाम्म्यदित्त्यैव्युन्दनम्।

शु.य.२। १

ॐ कृष्णाय नमःकृष्णम् आवाहयामि स्थापयामि पूजयामि भनेर पूजागर्ने।

६. कुशोदकमा **सविता**लाइ आवाहनगरी पूजागर्ने–

ॐ पूषन्नेकर्षेयमःसूर्यप्राजापत्य व्यूहरश्मीन् समूह तेजो यत्ते रूपं कल्याणतमं तत्तेपश्यामि यो सावसौ पुरुषः सोहमस्मि॥

ॐ सवित्रे नमः सवितारमावाहयामि स्थापयामि पूजया पूजयामि भनेर सवैको पूजागरेर साष्टाङ्गप्रणामगरी प्राशनगर्नू ।

ॐ यत्वगस्थिगतं पापं देहे तिष्ठति तावके।
प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम्॥

**प्रतिज्ञा संकल्पः**

हरिः ३ॐ तत्सत् ३ ३ॐ विष्णुर्विष्णुर्विष्णुविष्णुःश्रीमद्भगवतो महापुरुषस्य श्रीभूनीलानायकस्य सौशील्यादि सकलकल्याण

गुणगणसमलंकृतस्य श्रीमन्नारायणस्य नाभिकमलोद्भवस्य भगवदाज्ञया सकलजगत्सृष्टिं कुर्वतोदखिललोकपितामहस्य ब्रह्मणो द्वितीये परार्द्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे दिनस्य द्वितीये यामे तृतीये मुहूर्ते अष्टमे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे श्रीमन्नृपतिविक्रमार्कराज्याद् , श्रीरामानुजमुनि प्रादुर्भावाद्वा अमुक ....सम्वत्सरे वर्तमाने अमुक ...अयने अमुक.... ऋतौ अमुक.....मासे अमुक.....पक्षे अमुक.....तिथौ अमुक.....नक्षत्रे अमुक....योगे अमुक...करणे अमुक...राशिस्थिते चन्द्रे अमुक.....राशिस्थिते श्रीसूर्ये अमुक....राशिस्थिते देवगुरौ शेषेषु अन्येषु ग्रहेषु तत्तत्स्थान स्थितेषु सत्सु एवं गुणगण विशेषेण विशिष्टायां शुभपुण्यतिथौ जम्बूद्वीपे भारतवर्षे अमुक...राज्ये अमुक...नद्याः समीपे अमुक... ग्रामे अमुक..देव सन्निधौ वर्तमानः अमुक...वेदान्तर्गत अमुक...शाखाध्यायी अमुक...प्रवरान्वितः अमुक...गोत्रोत्पन्नः अमुक...नामाहं (अमुकशर्मा वर्मा गुप्तो दासोहं ) भगवत्कैङ्कर्यरूपेण भगवन्मुखोल्लासार्थम् अमुकामुक समाराधन पूर्वकम् अमुक...कर्मकरिष्ये करिष्यामि, वा ।

अब चुडाकरणादि संस्कारहरुमा त प्रायश्चित्तकानिमित्त **गौदान**गर्ने । पहिला हातमा पुष्प चन्दनअक्षताआदिदिलिएर प्रार्थनागर्ने –

## अथ गोदानविधिः

ॐ अपश्याम युवतिमाचरन्तीं मृताय जीवां परिणीयमानाम्।
अन्धेन यातमसा प्रावृतासि प्राचीमवाचीमवयन्नरिष्ट्यै॥

ॐ मयैतामास्तां भ्रियमाणादेवी सती पितृलोकं यदैषि।

विश्ववारा नभसा संव्यन्त्यभौ नो लोकौ पयसा वृणीहि।

ॐ रयिष्ठामग्निं मधुमन्तमूर्मिणमूर्जः सन्तं त्वा पयसोपसंसदेम।
संरय्या समुवर्चसा सचस्वानः स्वस्तये॥

ॐ माता रुद्राणां दुहिता वसूनां स्वसा दित्यानाममृतस्य नाभिः।
प्रणुवोचं चिकीतुषे जनाय मागामनागामदितिं वधिष्ठ।

ॐ ये जीवा ये च मृता ये जाता ये च जन्याः। तेभ्यो घृतस्य
धारयितुं मधुधारा व्युदन्तीम् ।

यसरी गोसूक्त पढेर गाइमाथी पुष्प समर्पणगर्ने–

ॐ सुं सुरभ्यै नमः यस मन्त्रले पुष्प अक्षता चन्दन वस्त्र नैवेद्य आदिद्वारा
गाइलाई पूजा गरेर–

आकृष्णेन यसमन्त्रले ब्राह्मणको पूजागर्ने–

ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च।
हिरण्ययेन सविता रथेनादेवोयाति भुवनानि पश्यन्॥ शु.य.३३। ४३

त्यसपछि कर्मपात्रको जलले गाइलाई सम्प्रोक्षणगर्ने –

ॐ नमो गोभ्यःश्रीमतीभ्यःसौरभेयीभ्य एव च।

नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः॥

ॐ इरावती धेनुमती हि भूत गूँ सूयवसिनी मनवेदशस्या।
व्यस्क्कब्भ्ना रोदसी विष्णवेतेदाधर्थपृथिवीमभितो मयुखैः स्वाहा॥
शु.य.५।१६

अब अर्घ्यपाद्यआचमनवस्त्रपुष्पअक्षता एवं धूप दीपले गाईकोपूजा गरिसकेपछि अङ्गपूजा गर्ने—

पृष्ठभागमा– ॐ बह्मणे नमः। गलामा– ॐ विष्णवे नमः।

मुखमा– ॐ रुद्राय नमः। रोमकुपहरुमा– ॐ सर्वेभ्यो महर्षिभ्यो नमः। पुच्छरमा –ॐसर्वनागेभ्यो नमः। स्तनहरुमा –ॐ चतुस्समुद्रेभ्यो नमः।

खुरहरुमा– ॐ अष्टकुपर्वतेभ्यो नमः। दुवैनेत्रमा– शशिभास्कराभ्यां नमः सिङ्कोमध्यमा – ॐसर्वतीर्थेभ्यो नमः। मूत्रस्थानमा –ॐगङ्गादि सर्व तीर्थेभ्यो नमः। गोवरमा – ॐ लक्ष्म्यै नमः। दुबैकानमा— ॐअश्विनीकुमाराभ्यां नमः। जिभ्रोमा ॐ सरस्वत्यै नमः। नाकको प्वालमा— ॐ सुमुखाय नमः। पेटमा – ॐ पृथिव्यै नमः। दाहिनेपट्टी—ॐ कुवेराय नमः। वायाँपट्टी— ॐ वरुणाय नमः। हुङ्कारमा— ॐसर्वदेवेभ्यो नमः। यसरी अङ्गपूजागरेर गाइकोप्रार्थनागर्ने

पृष्ठे ब्रह्मा गलेविष्णुर्मुखेरुद्राःप्रतिष्ठिताः।

मध्ये देवगणाःसर्वे रोमकूपे महर्षयः॥

नागाःपुच्छे खुराग्रेषु ये चाष्टौकुलपर्वताः।

मूत्रे गङ्गादयो नद्यो नेत्रयोः शशिभास्करौ॥

श्रृङ्गयोः सर्वतीर्थानि गोमये कमलालया।

स्तनेषु सागराःसर्वे जिह्वायां च सरस्वती ॥
कर्णयोरश्विनौ नासापुटयोः सुमुखः स्मृतः ।
दक्षपार्श्वे कुवेरस्तु वामे जलधिनायकः ॥
हुङ्कारे सर्वदेवाश्च धरा चैवोदरे स्थिता ।
एते यस्याः स्तनौ देवाः सा धेनुर्वरदास्तु मे ॥
या लक्ष्मीःसर्वभूतानां यत्र देवा व्यवस्थिता ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥

अब गाइकोपुच्छरद्वारा आफ्नाशिरमा अभिषेकगर्ने–

ॐ मनोमेतर्पयतव्वाचम्मेतर्पयतप्प्राणम्मेतर्पयत चक्षुर्म्मेतर्पयत श्श्रोत्रम्मेतर्पयतात्त्मानं मे तर्पयतप्प्रजाम्मेतर्पयत पशून्मेतर्पयत गणान्मेतर्पयत गणा मे मा वितृषन् ॥ शु.य.६ । ३१

अब हातमा जलअक्षताआदिलिएर सङ्कल्पगर्ने –

हरिः ॐ तत्सत् ३ ओं विष्णुर्विष्णुर्विष्णुः अद्य श्रीमद्भगवतो महा पुरुषस्य श्रीविष्णोराज्ञया प्रवर्तमानस्य परार्धद्वयजीविनो ब्रह्मणो द्वितीयेपरार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे दिनस्य द्वितीयेयामे तृतीयेमुहूर्ते अष्टमे श्रीश्वेतवाराहकल्पे वैवस्वत मन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथम चरणे श्रीमन्नृपति विक्रमार्कराज्याद् , श्रीरामानुजमुनि प्रादुर्भावाद्वा अमुक ....सम्वत्सरे वर्तमाने अमुक ...अयने अमुक.... ऋतौ अमुक.....मासे अमुक.....पक्षे अमुक.....तिथौ अमुक.....नक्षत्रे अमुक....योगे अमुक... करणे अमुक...

राशिस्थिते चन्द्रे अमुक.....राशिस्थिते श्रीसूर्ये अमुक....राशिस्थिते देवगुरौ शेषेषु अन्येषु ग्रहेषु तत्तत्स्थान स्थितेषु सत्सु एवं गुणगण विशेषेण विशिष्टायां शुभपुण्यतिथौ अमुक... गोत्रोत्पन्नः अमुक... नामाहं (अमुकशर्मा वर्मा गुप्तो दासोहं ) भगवत्कैङ्कर्यरूपेण भगवदाज्ञया भगवन्मुखोल्लासार्थम्  रौप्यखुरां ताम्रपृष्ठां सुर्वणश्रृङ्गां मुक्तापुच्छां कांस्यदोहनीं सुरत्नमालिकां दुकूलादि परिवृतां सोपस्करां रुददैवतां कृच्छ्रचान्द्रायणरूपाम् इमां गां गवार्थे परिकल्पितं द्रव्यं वा अमुकगोत्राय अमुकप्रवरान्विताय अमुकशर्मण श्रीवैष्णवाय ब्राह्मणाय तुभ्यमहं दातुं उत्सृजे ।

यसरी जलअक्षतासहित गाईकोपुच्छर ब्राह्मणकाहातमा दिने ।

ॐ कोदात्कस्माऽअदात्कामोदात्कामायादात् । कामो दाताकामः प्प्रतिग्ग्रहीता कामै तत्ते ॥ शु.य.७ । ४८

ब्राह्मणले– स्वस्ती भनेर गाइकोपुच्छर हातमा लिने –

सुवर्णादिद्रव्य लिएर– अद्यकृतैतद्दानप्रतिष्ठार्थम् हिरण्यादिद्रव्यं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं दातुमुत्सृजे ।

यसरी दानप्रतिष्ठादिएर प्रार्थना गर्ने–

ॐ गावो ममैनः प्रणुदन्तु सौर्यास्तथासौम्याः स्वर्गयानाय सन्तु ।
आत्मानं मे मातृवच्चाश्रयन्तु तथानुक्ताः सन्तु सत्याशिषो मे ॥

ॐ स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ।

सर्वपापहराधेनुःतस्माच्छान्तिं प्रयच्छ मे ॥

यसरी गाई र ब्राह्मणलाई पनि प्रदक्षिणागरी अभिवादनगर्ने , विप्रलेपनि गाईकोपुच्छरले यजमानलाईअभिषेक गरिदिने–

ॐ द्यौः शान्तिरन्तरिक्ष गूँ शान्तिः पृथिवी शान्तिरापः शान्ति रोषधयःशान्तिः । व्वनस्प्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व गूँ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि । शु.य.३६ । १७

॥ इति गोदानप्रयोगः ॥

## अथ भुवः पञ्चसंस्काराः

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।

विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

सर्वमङ्गलमाङ्गल्यं सर्वोपद्रवनाशनम् ।

वन्दे रामानुजार्यस्य नित्यं पादाम्बुजद्वयम् ॥

निम्नमन्त्र उच्चारणगरी यज्ञभूमि शोधनगर्ने–

ॐ भूरसिभूमिरस्यदितिरसिव्विश्वधायाव्विश्वस्य भुवनस्य धर्त्री । पृथिवीं च्छपृथिवीन्दृ गूँ ह पृथिवीम्माहि गूँ सीः ॥ शु.य.१३ । १८

मृत्तिका(माटो)स्थापनागर्ने–

ॐ अश्माचमे मृत्तिकाचमे गिरयश्चमे पर्व्वताश्चमे सिकताश्चमे वनस्पतयश्चमे हिरण्यञ्चमे यश्चमे श्यामञ्चमे लोहञ्चमे सीसञ्चमे त्रपुचमे ज्ञेनकल्पन्ताम् । शु.य.१८ । १३

तीन दर्भ(कूश) लिएर पढ्ने–

ॐ एषवस्तोमो मरुतऽइयङ्गीर्मान्दा ऽस्य मान्यस्यकारोः एषा ासीष्टतन्वे व्वयां विद्यामेषं व्वृजनञ्जीरदानुम् । शु.य.३४ । ४८

कूशले वेदिमा सफागर्ने–

ॐ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्व हसः । शु.य.२० । १४

गोबर र जलले भूमिलाइ सफागर्ने—

ॐ मानस्तोकेतनयेमानऽआयुषि मानोगोषु मानोऽअश्वेषुरीरिषः । मानोव्विरान्नुद्रभामिनो वधीर्हविष्मन्तःसदमित्त्वा हवामहे ।

शु.य.१६ । १६

भूमीमा सुरोले उल्लेखन गर्ने (खन्ने)

ॐ त्वामिद्धिहवामहे सातौवाजस्य कारवः । त्वां व्वृत्रेष्विन्द्रसत्त्पतिन्नरस्त्वाङ्काष्ठा सर्वतः । शु.य.२७ । ३७

शोधितगरीएकोभूमीमा निम्नलिखित मन्त्रले पूर्वतिर सुरोले तीनवटा रेखा कोर्ने —

ॐ प्रथमाद्विितीयैर्द्वितीयास्तृतीयैस्तृतीयाःसत्येनसत्यंयज्ञेनयज्ञो यजुर्भिर्यजू गूँ षि सामभिः सामान्यृग्भिर्ऋचः पुरोनुवाक्याभिः पुरोनुवाक्यायाज्ज्याभिर्याज्यावषट्कारैर्वषट्काराऽआहुतिभिराहुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहा ॥ शु.य.२० । १२

ॐ दक्षिणामारोह त्रिष्टुप्त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्मऽऋतुः क्षेत्रन्द्रविणं प्रतीचीमारोह ॥ शु.य.१० । ११

ॐ प्रतीचीमारोहजगतीत्त्वावतु वैरूप गूँ साम सप्तदश स्तोमोवर्षाऽ ऋतुर्व्विड्द्रविणमुदीचीमारोह ॥ शु.य.१० । १२

ॐ उदीचीमारोहानुष्टुप्त्वावतु व्वैराज गूँ सामैकवि गूँ शस्तोमः शरदृतुः फलन्द्रविण मूर्द्धामारोह ॥ शु.य.१० । १३

अब अनामिका(साँइली) र अङ्गुष्ठ(बुढीऔंलाले) अघि कोरेको माटो उठाउने–

ॐ सदसस्पतिमद्‌भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिम्मेधामयासिष गुँ स्वाहा । शु.य.३२ । १३

त्यसपछि वेदीवाट भिकिएकोमाटो मास्तिर फ्याँकिदिनु–

ॐ व्व्रतङ्कृणुतव्व्रतङ्कृणुताग्निर्ब्ब्रह्माग्निर्यज्ञोवनस्पतिर्यज्ञियः ।
दैवीन्धियं मनामहे सुमृडीकामभिष्टयेवर्चोधांयज्ञवाह स गूँ
सुतीर्त्थानोऽअसद्वशे । येदेवामनोजातामनोयुजो दक्षक्रतवस्तेनोवन्तु
तेनःपान्तु तेब्भ्यः स्वाहा ॥ शु.य.४ । ११

वेदीमा जललेअभिषेक गर्ने–

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये । शंयोरभिस्रवन्तु नः ।
शु.य.३६ । १२

॥ इति भुवः पञ्चसंस्काराः॥

कुण्ड अथवा वेदीमा रंगवल्ली(रेखी) बनाई त्यसमाथी कुश राखेर स्वस्तिवाचन पाठगर्ने । अथवा पाठगर्दै रंगवल्ली(रेखी) बनाउने–

## अथ स्वस्तिवाचनम्

### अथ भद्रसूक्तम्

ॐ आनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ।

देवानोयथासदमृद्‌वृधेऽअसन्नप्प्रायुवोरक्षितारोदिवेदिवे ॥

देवानाम्भद्रा सुमतिर्ऋजूयतान्देवाना गूँ रातिरभिनो निवर्तताम् ।

देवाना गूँ सख्यमुपसेदिमाव्वयन्देवानऽआयुः प्रतिरन्तु जीवसे ॥

तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ।

अर्य्यमणंवरुणगूँसोममश्विना सरस्वती नः सुभगामयस्करत् ।

तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिता द्यौः ।

तद्ग्रावाणःसोमसुतोमयो भुवस्तदश्विना श्रृणुतन्धिष्ण्याग्रुवम् ॥

तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमयेव्वयम् ।

पूषानो यथा व्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥

स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनःपूषाविश्ववेदाः ।

स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पितिर्द्दधातु ।

पृषदश्वामरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः ।

अग्निजिह्वामनवःशूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥

भद्रङ्कर्णेभिःश्रृणुयामदेवाभद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवा गूँ सस्तनूभिर्व्यशेमहिदेवहितं यदायुः ॥

शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्रा जरसन्तनूनाम् ।

पुत्त्रासो यत्र पितरो भवन्ति मानोमद्ध्यारीरिषतायुर्गन्तोः ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः ।

विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥

शु.य.२५। १४—२३

तम्पत्क्नीभिरनुगच्छेमदेवाःपुत्त्रैर्भ्रातृभिरुत वा हिरण्यैः ।

नाकंगृब्भ्णानाः सुकृतस्यलोके तृतीये पृष्ठेऽअधिरोचने दिवः ॥

शु.य.१५। ५०

ॐ द्यौः शान्तिरन्तरिक्ष गूँ शान्तिः पृथिवी शान्तिरापः शान्ति रोषधयः शान्तिः । व्वनस्प्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व गूँ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि । शु.य.३६ । १७

**अब हातमा सेतो(पहेंलो)सर्स्यूँ लिएर मण्डपको वरीपरी छर्ने–**

पूर्वे रक्षतु गोविन्द आग्नेयां गरुडध्वजः ।

याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥

वारुण्यां केशवो रक्षेद् वायव्यां मधुसूदनः ।

उत्तरे श्रीधरो रक्षेदैशान्यां तु गदाधरः ॥

उर्ध्वं गोवर्धनो रक्षेदधस्ताच्च त्रिविक्रमः ।

एवं दशदिशो रक्षेद् वासुदेवः सनातनः ॥

ॐ रक्षोहणंव्वलगहनंवैष्णवीमिदमहन्तंव्वलगमुत्किरामि

यम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंव्वलगमुत्किरामि यम्मे समानो यमसमानोनिचखानेदमहन्तं वलगमुत्किरामि यम्मेसबन्धु र्यमसबन्धुर्न्निचखानेदमहन्तंव्वलगमुत्किरामि यम्मेसजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥ शु.य.५ । २३

स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्व्वराडस्य मित्रहा ॥ शु.य.५। २४

रक्षोहणोवोव्वलगहनःप्प्रोक्षामि वैष्णवान् रक्षोहणो वोव्वलगहनो वनयामि वैष्णवान् रक्षोहणोवो वलगहनो वस्तृणामिवैष्णवान्

रक्षोहणौवां व्वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्य्यूहामिवैष्णवी वैष्णवमसि वैष्णवास्थ ॥ शु.य.५। २५

विनायकाविघ्नकरामहोग्रा यज्ञद्विषो ये पिसितासनश्च ।
सिद्धार्थकैर्व्रजसमानकल्पैः मया निरस्तास्वगृहं प्रयान्तु ॥

## अथ दिक्पूजनम्

अब वेदीको आठै दिशामा पूर्वादिक्रमले पूजागर्ने–

पूर्वतिर– ॐ पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरिष्यमङ्गिरस्वदच्छेमोग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ शु.य.५। २५

दक्षिणतिर– ॐ अग्निश्चपृथिवी च सन्नतेते मे सन्नमतामदो व्वायुश्चान्तरिक्षञ्च सन्नतेते मे सन्नमतामदऽआदित्यश्चद्यौश्च सन्नते ते मे सन्नमतामदऽआपश्च वरुणश्च सन्नतेते मे सन्नमतामदः । सप्तस गूँ सदोऽअष्टमीभूत साधनी । सकामाँ२ऽ अद्ध्वनस्कुरु संज्ञानमस्तु मे मुना ॥ शु.य.२६। १

पश्चिमतिर– ॐ वायोषेते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये । शु.य.२७ । ३२

उत्तरतिर– ॐ सोमो धेनु गूँ सोमोऽअर्वन्तमाशु गूँ सोमो वीरङ्कर्मण्यन्ददाति । सादन्यं विदत्थ्य गूँ सभेयम्पितृश्श्रवणं योददाशदस्मै ॥ शु.य.३४। २१

आग्नेयतिर– ॐ अग्निदूतम्पुरोदधे हव्यवाहमुपब्रुवे । देवाँ २ आशादयादिह ॥ शु.य.२२। १७

नैर्ऋत्यतिर–ॐ कयानश्चित्रऽआभुवदूती सदावृधःसखा। कयाश चिष्ठयावृता। शु.य.२७। ३९

वायव्यतिर– ॐ वायुरनिलममृतमथेदं भस्मान्त गूँ शरीरम्।

ॐ३ क्रतोस्मर क्लिबेस्मर कृत गूँ स्मर॥ शु.य.४०।१५

ईशानतिर– ॐ ईशावास्यमिद गूँ सर्वं यत्किञ्च जगत्याञ्जगत्। तेनत्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥ शु.य.४०।१

यसपछि तलका तीन मन्त्रहरु पढ्दै वेदिको माझमा पूजा गर्ने–

ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाँ२ऽअजस्रम्। तस्य पूषाप्रसवेयाति विद्वान्त्सम्पश्यन्विश्वाभुवनानि गोपाः॥

शु.य.१७।५८

ॐ प्रजापतेनत्वदेतान्न्यन्न्योव्विश्वारूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तुवय गूँ स्यामपतयोरयीणाम्॥

शु.य.२३।६५

ॐ सदसस्पतिमद्भूतं प्रियमिन्द्रस्यकाम्यम्। सनिम्मेधामयासिष गूँ स्वाहा॥ शु.य.३२।१३

अब ईशानादिक्रमले भू ,वराह,अनन्त ,कूर्मलाइ चामलमाथी कूशकोकूर्च बनाएर स्थापनागर्ने र विनियोगपूर्वक पहेंलाअक्षताले पहिले भूमीदेवीलाई आवाहनगरी पूजन गर्ने–

## अथ भूपूजनम्

ॐ भूरसीत्यस्य प्रजापतिऋर्षिः प्रस्तारपंक्तिश्छन्दः भूमिदेवता भूमिपूजने विनियोगः ।

ॐ भूरसिभूमिरस्यदितिरसिव्विश्वधाया व्विश्वस्य भुवनस्य धर्त्री । पृथिवींयच्छपृथिवीन्दृ गूँ ह पृथिवीम्माहि गूँ सीः ॥

शु.य.१३ । १८

आगच्छ सर्वकल्याणि वसुधे लोकधारिणी ।

पृथिवि ब्रह्मदत्तासि कश्यपेनाभिवन्दिते ॥

भूमिमावाहयाम्यद्य धारिणीं सर्वदेहिनाम् ।

सर्वभूतप्रतिष्ठाञ्च क्षितिंक्षोणीं सरस्वतीम् ॥

एहि मे वसुधे देवि वरदे भूतभाविनि ।

सर्वाश्रये महाभागे देववद्धयहारिणी ॥

अब भूमीमा दण्डवत् प्रणाम गर्ने–

ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना ।

दंष्ट्राग्रैर्लीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥

त्यसपछी अर्घ्यस्थापना गरी घुँडाटेकेर भूमीलाई अर्घ्य दिने –

(दध्यक्षत कुशाग्राणी क्षीरं दूर्वा तथा मधु ।

सिद्धार्थकैः सहप्रोक्तो ह्यष्टाङ्गोर्घःफलैः सह) ॥ भ.प्र.पद्धतिः

ॐ ब्रह्मणानिर्मिते देवि विष्णुना शङ्करेण च ।

पार्वत्या चैव गायत्र्या स्कन्दवैश्रवणेन च ॥

यमेनपूजिते देवि धर्मस्य विजिगीषया ।

सौभाग्यं देहि पुत्राँश्च धनं रूपं च पूजिता ।

पृथिवी देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥

गृहाणार्घ्यमिमं देवि सर्वकामांश्च देहि मे ॥

यसरी अर्घ्यप्रदानगरेर पञ्चोपचारलेपूजागर्ने–

ॐ भूं भूम्यै नमःअर्घ्यं समर्पयामि । ॐ पृं पृथिव्यै नमः पाद्यं समर्पयामि । ॐ अं अचलायै नमः आचमनं समर्पयामि । ॐ सं सर्वधात्र्यै नमः

स्नानं समर्पयामि । ॐ अं अनन्तायै नमः नैवेद्यं समर्पयामि ।

त्यसपछि पुष्पलिएर प्रार्थनागर्ने–

उपचारानिमांस्तुभ्यं ददामि परमेश्वरि ।

भक्त्या गृहाण देवेशि त्वामहं शरणं गतः ॥

त्यसपछि फल लावा दहि सातुको चारवटा पिण्ड (डल्ला) बनाएर चन्दन आदिले अलंकृतगरी सम्भवभएमा वाँशकोपात्रमा नभए अन्य पात्रमा घीउमा भिजाएका बाती बालेर –

हातमापुष्प जल अक्षताआदिलिइ

भो ! भूदेवि समस्तपरिवारसहिता इमं बलिं गृहाण गृहीत्वा च मम शान्तिकर्त्री पुष्टिकर्त्री वरदा भव ॥

हातमा लिएको जल अक्षता भूमीमा छोडी , प्रार्थना गर्ने–

देशस्वामि पुरस्वामि गृहस्वामि परिग्रहे ।

मनुष्य धन हस्त्यश्व पशुवृद्धिकरी भव ॥

नमो नमो मेदिनिलोकमातरुर्व्यै महाशैलशिलाधरायै ।

नमो नमो धारिणि लोकधात्र्यै जगत्प्रतिष्ठे वसुधे नमोस्तु ते ॥

## अथ वराहपूजनम्

वराह इति मन्त्रस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दःवराहो देवता वराह पूजने विनियोगः ।

ॐ वराहवः स्वतपसो विद्युन्महसो धूपयः ।

श्वापयो गृह मेधाश्चेत्येते मे ये चेमेऽशिमि विद्विषः ॥

देवमावाहयाम्यद्य नृवराहं महाबलम् ।

बालेन्दु तुल्यदंष्ट्राग्रलीलोद्धृतवसुन्धराम् ॥

एहि मे देवदेवेश वराहामित विक्रम ।

निरस्ताशेषदैत्येन्द्र दीनभक्तजनप्रिय ॥

ॐ हूँ वराहाय नमः

यसरी वराहको आवाहनगरी **अर्घ्यादि** उपचारले पूजनगरेर हातमापुष्पलिइ प्रार्थनागर्ने—

दंष्ट्राग्रेणोद्धृतागौरुदधिपरिवृता पर्वतैर्निम्नगाभिः

साकं मृत्पिण्डवत्प्राग्बृहदुरुवपुषानन्तरूपेण येन ।

सोऽयं कंसासुरारिर्मुरनरकदशास्यन्तकृत् सर्वसंस्थः
कृष्णोविष्णुःसुरेशो नुदतु ममरिपूनादिदेवो वराहः ॥

## अथ अनन्तपूजनम्

ॐ तन्मित्रस्येतिमन्त्रस्य कुत्सऋृषिःत्रिष्टुप्छन्दः अनन्तो देवता अनन्तपूजने विनियोगः ।

ॐ तन्मित्रस्य वरुणस्याभिचक्षेसूर्योरूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुसदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ शु.य.१३।१८

आवाहयिष्ये वरदमनन्तं दीप्ततेजसम् ।

फणावलिगताशीर्ष महीमण्डलधारिणम् ॥

एह्यनन्त महाभाग शेषाहे धरणीधर ।

शशाङ्कशतसंकाश नीलाम्बरपरीवृतः ॥

ॐ भूर्भुवःस्वः अनन्ताय नमः

यसरीअनन्तको आवाहनगरी **अर्घ्यादि** उपचारले पूजनगरेर हातमापुष्पलिइ प्रार्थनागर्ने—

ॐ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे ।

सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥

## अथ कूर्मपूजनम्

ॐ कूर्मस्त इति सौचीकोऽग्निऋृषिः जगतीछन्दः कूर्मो देवता कूर्मपूजने विनियोगः ।

ॐ कूर्मस्तऽआयुरञ्जरं यदग्ने यथा युक्तोजातवेदो नरिष्याः।
अथावहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजातः।

कूर्ममावाहयाम्यद्य धृतमन्दर पर्वतम्।

दुर्निरीक्ष्यातिगम्भीरमहासलिलगोचरम्॥

एहिकूर्म महाभाग सुधोत्पत्तिकराच्युत।

मन्दराचल संघर्ष क्षणकण्डूयनोत्सव॥

ॐकूर्माय नमः

यसरी पहेंला अक्षताले कूर्मको आवाहनगरी **अर्घ्यादि** उपचारले पूजनगरेर हातमापुष्पलिइ प्रार्थनागर्ने–

तुभ्यं नमस्क्रियां कूर्मः कूर्मरूपाय वेधसे।

धारयन्नमराद्रिञ्च विबुधानन्ददायिने॥

दिव्यामृतार्थमथिते महाब्धौ देवासुरैर्वासुकिमन्दराभ्याम्।
मज्जन्तमब्धौ धृतमद्रिमङ्गे तं कूर्मरूपं प्रणमामि भक्त्या॥

यसरी पूजनगरी प्रणाम गरेर **दीप प्रज्वलन** गर्ने –

## अथ दीपपूजनम्

ॐ पृष्टोदिविपृष्टोऽअग्निःपृथव्यांपृष्टोविश्वाऽओषधीराविवेश।
वैश्वानरःसहसापृष्टोऽअग्निः सनो दिवासरिषस्पातु नक्तम्।

शु.य.१८।७२

ॐ स्थिरोभव वीड्वङ्गऽआशुर्भववाज्ज्यर्वन् । पृथुर्ब्भव सुखदस्त्त्व मग्नेः पुरीषवाहणः ॥ शु.य.११ । ४४

ॐ कर्मसाक्षिणे दीपनारायणाय नमः ।

आवाहयामि स्थापयामि पूजयामि ।

यसरी प्रतिज्ञागरी आसन अर्घ्य पाद्य आचमन स्नान चन्दन अक्षता पुष्प धूप दीप नैवेद्य दक्षिणाआदिले पूजन गरी प्रार्थना गर्ने ।

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे ।
सहस्रनाम्नेपुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥

## अथ ऐशान्ये प्रधानकलशपूजनम्

स्वर्णं वा रजतं वापि ताम्रं मृण्मयमेव वा ।

अकालमव्रणं चैव सर्वलक्षण संयुतम् ।

पञ्चाशांगुलवैफुल्यमुत्सेधःषोडशांगुलः ॥

द्वादशांगुलकम्मूलम्मुखमष्टांगुलन्तथा ॥

ईशानमा (सुन चाँदी तामा अथवा माटोबाट) निर्मित दुइवटा घडालाई अलंकृतगराएर स्थापनागरी घडाको आधारभएको भूमीलाई प्रार्थना गर्ने–

ॐ भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महीत्वा ।

उपस्थेते देव्यदितेऽग्निमन्नादमन्नाद्याया दधे ॥

धान अथवा चामल राख्ने–

ॐ धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम् । इन्द्रप्प्रातर्जुषस्वनः ।
शु.य.२० । २९

अब कलशस्थापना गर्ने—

ॐ कुम्भोवनिष्टुर्ज्जनिता शचीभिर्य्यस्मिन्नग्ग्रेयोन्न्याङ्ग भोंऽअन्तः । प्लाशिर्व्यक्तःशतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः । शु.य.१९ । ८७

कलशमाजल भर्ने—

ॐ अपो देवीरुपह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं गूँ हविः ।

कलशलाई स्थीर गर्ने—

ॐ स्थिरोभव वीड्वङ्गऽआशुर्भववाज्ज्यर्वन् । पृथुर्ब्भव सुखदस्त्त्व मग्नेः पुरीषवाहणः ॥ शु.य.११ । ४४

कलशमा पञ्चपल्लव (आँप,पीपल,वर,डुम्री,पाखरीका पातहरु) राख्ने—

ॐ अश्वत्थेवोनिषदनं पर्णेवोव्वसतिष्कृता । गोभाजऽइत्किला सथ यत्सनवथपूरुषम् । शु.य.३५ । ४

कुशको कूर्च राख्ने—

ॐ पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनुर्न तदामोऽअश्नुते श्रृतास इद्वहंतस्तत् समासते ।

कलशमा दूवो राख्ने—

ॐ सहस्रपरमा देवी शतमूला शतांकुरा ।

सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी ॥

कलशमा फल राख्ने–

ॐ याःफलिनीर्य्याऽअफलाऽअपुष्पायाश्च पुष्पिणीः । बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्व गूँ हसः ॥ शु.य.१२ । ८९

सर्वौषधी राख्ने–

(कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।

वचाकर्पूरमुस्ता च सर्वौषध्यः प्रकीर्तिताः ॥)

ॐ याऽओषधीःपूर्व्वाजातादेवेब्भ्यस्त्रियुगम्पुरा । मनैनुबब्भ्रूणा मह गूँ शतन्धामानि सप्तच ॥ शु.य.१२ ।७५

पञ्चरत्न राख्ने–(सून,हीरा,मोती,पुष्पराज,नीलम् )

ॐ परिवाजपतिः कविरग्निर्हव्व्यान्यक्क्रमीत् । दधद्रत्क्नानिदाशुषे ॥ शु.य.११ । २५

चन्दन राख्ने–

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ श्रीसूक्तम् ९मन्त्र

सप्तमृत्तिका राख्ने–

(अश्वस्थानाद् गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।(चौवाटो )
राजद्वाराच्च गोष्ठाच्च मृदमानीय निक्षिपेत् ॥)

ॐ मृत्तिके प्रतिष्ठितं सर्वं तन्मे निर्णुद मृत्तिके ।

त्वयाहतेन पापेन गच्छामि परमां गतिम् ॥

कलशकोमुखमा पूर्णपात्रराख्ने—

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

पूर्णपात्रमाथि श्रीफल(नरिवल)राख्ने –

ॐ आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसानुदन्तु मायान्तरायाश्च वाह्याऽअलक्ष्मीः ।श्रीसू.६म

कलशमा वस्त्रवेष्टन गर्ने—

ॐ सुजातोज्ज्योतिषासहशर्म्मव्वरूथमासदत्स्वः । वासोऽअग्ने विस्वरूप गूँ सम्व्ययस्वव्विभावसो ॥ शु.य.११ । ४०

त्यसपछि प्रधानकलशको चारैदिशामा चार वेदको आवाहन गरी पूजा गर्ने –

पूर्वमा ऋग्वेदको आवाहन गर्ने—

ॐ ऋग्वेदाय नमः ऋग्वेदं आवाहयामि स्थापयामि पूजयामि ।

ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

दक्षिणमा यजुर्वेदको आवाहनगर्ने—

ॐ यजुर्वेदाय नमः यजुर्वेदम् आवाहयामि स्थापयामि पूजयामि ।

ॐ इषेत्वोर्ज्जेत्वा व्वायवस्थदेवोवः सविताप्प्रार्पयतुश्श्रेष्ठतमाय कर्म्मणऽआप्प्यायद्ध्वमघ्न्याऽइन्द्रायभागं प्रजावतीरनमीवाऽअयक्ष्मा मावस्तेनऽईशतमाघस गूँ सोद्ध्रुवाऽअस्मिन्गोपतौ स्यातबह्वीर्य्यज मानस्यपशून्पाहि । शु.य.१ । १

पश्चिममा सामवेदको आवाहनगर्ने—

ॐ सामवेदाय नमः सामवेदम् आवाहयामि स्थापयामि पूजयामि

ॐ अग्नऽ आयाहि वीतये गृणानो हव्य दातये। निहोता सत्सि वर्हिषि ॥

उत्तरमा अथर्ववेदको आवाहन गर्ने

ॐ अथर्ववेदाय नमः अथर्ववेदं आवाहयामि स्थापयामि पूजयामि

ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये। शंय्योरभिस्रवन्तुनः।

शु.य.३६।१२

ॐ चतुर्भ्योवेदेभ्यो नमः सर्वोपचारान् समर्पयामि।

कलश प्रतिष्ठा गर्ने–

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञ गूँ समिमं दधातु। विश्वे देवासऽइहमादयन्तामोँ३ प्रतिष्ठ।

शु.य.२।१३

एषवै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्तेसर्वमेव प्रतिष्ठितं भवति।

यसरी पहेँला अक्षताले कलश प्रतिष्ठागरेर प्रार्थना गर्ने–

देवदानवसंवादे मथ्यमाने महोदधौ।

उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥

त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः।

आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः।

त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।

त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।

सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥

## अथ वरुणपूजनम्

त्यही पूजनगरेको कलशमा नै पहेंला अक्षताले वरुणको आवाहनगरी पूजा गर्ने—

ॐ इमं मे वरुणश्श्रुधीहवमद्याचमृडय । त्वामवस्युराचके ॥

ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेय्यजमानो हविर्ब्भिः । अहेडमानोव्वरुणेहबोद्ध्युरुष गूँ समानऽआयुः प्रमोषीः ॥

शु.य.२१ । १–२

अस्मिन्कलशे साङ्गं सपरिवारं सशक्तिकं भगवद्पार्षदं वरुणम् आवाहयामि स्थापयामि पूजयामि ॥

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनो त्वरिष्टं य्यज्ञ गूँ समिमं दधातु । विश्वे देवासऽइहमादयन्तामोँ३ प्रतिष्ठ ।

शु.य.२ । १३

एषवै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्तेसर्वमेव प्रतिष्ठितं भवति ।

साङ्गाय सायुधाय सवाहनाय सपरिवाराय भगवद्पार्षदाय वरुणायनमः ।

साङ्गं सायुधं सवाहनं सपरिवारं सशक्तिकं भगवद्पार्षदं वरुणम् प्रतिष्ठापयामि ।

आसनार्थे पुष्पं समर्पयामि    ॐवरुणाय नमः ।

हस्तयो अर्घ्यं समर्पयामि ॐ वरुणाय नमः ।

पादयो पाद्यं समर्पयामि ॐ वरुणाय नमः ।

मुखे आचमनीयं समर्पयामि ॐ वरुणाय नमः ।

सर्वाङ्गे स्नानीयं समर्पयामि ॐ वरुणाय नमः ।

पञ्चामृतेन स्नापयामि ॐ वरुणाय नमः ।

शुद्धोदकेन स्नापयामि ॐ वरुणाय नमः ।

वस्त्रं समर्पयामि ॐ वरुणाय नमः ।

यज्ञोपवीतं समर्पयामि ॐ वरुणाय नमः ।

उपवस्त्रं समर्पयामि ॐ वरुणाय नमः ।

गन्धं समर्पयामि ॐ वरुणाय नमः ।

अक्षतान् समर्पयामि ॐ वरुणाय नमः ।

पुष्पाणि समर्पयामि ॐ वरुणाय नमः ।

पुष्पमालां समर्पयामि ॐ वरुणाय नमः ।

सुगन्धितद्रव्यं समर्पयामि ॐ वरुणाय नमः ।

धूपं आघ्रापयामि ॐ वरुणाय नमः ।

दीपं सन्दर्शयामि ॐ वरुणाय नमः ।

नैवेद्यं निवेदयामि ॐ वरुणाय नमः ।

मध्ये मध्ये पानीयं जलं समर्पयामि ॐवरुणाय नमः ।

आचमनीयजलं समर्पयामि ॐवरुणाय नमः ।

ताम्बूलं समर्पयामि ॐवरुणाय नमः ।

दक्षिणाद्रव्यं समर्पयामि ॐवरुणाय नमः ।

अब वरुणको प्रार्थना गर्ने–

त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।
सान्निध्यं कुरुदेवेश प्रसन्नो भव सर्वदा ॥

नमो नमस्ते स्फटिकप्रभाय, सुश्वेतहाराय सुमङ्गलाय ।
सुपाशहस्ताय झषासनाय , जलाधिनाथाय नमो नमस्ते ॥

सर्वोपचारार्थे मन्त्रपुष्पाञ्जलिं समर्पयामि ।

## अथ ब्राह्मणवरणम्

कर्ताले उर्ध्वपुण्ड्र धारण गरी पूर्वाभिमुखभइ सुपारी,फल,वस्त्र द्रव्य, आभूषणआदि वरणसामाग्रीहरुलिएर पश्चिमाभिमुखभयेर उर्ध्वपुण्ड्र धारण गरी वसेका ब्राह्मणहरुलाई वरण गर्ने–

हरिः ॐ तत्सत् ३ ओं विष्णुर्विष्णुर्विष्णुः अद्य श्रीमद्भगवतो महापुरुषस्य श्रीविष्णोराज्ञया प्रवर्तमानस्य परार्धद्वयजीविनो ब्रह्मणो द्वितीयेपरार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे दिनस्य द्वितीयेयामे तृतीयेमुहूर्ते अष्टमे श्रीश्वेतवाराहकल्पे वैवस्वत मन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथम चरणे श्रीमन्नृपतिविक्रमार्कराज्याद् , श्रीरामानुजमुनि प्रादुर्भावाद्वा अमुक

....सम्वत्सरे वर्तमाने अमुक ...अयने अमुक.... ऋतौ अमुक.....मासे अमुक.....पक्षे अमुक.....तिथौ अमुक.....नक्षत्रे अमुक....योगे अमुक...करणे अमुक...राशिस्थिते चन्द्रे अमुक.....राशिस्थिते श्रीसूर्ये अमुक....राशिस्थिते देवगुरौ शेषेषु अन्येषु ग्रहेषु तत्तत्स्थान स्थितेषु सत्सु एवं गुणगण विशेषेण विशिष्टायां शुभपुण्यतिथौ अमुक...गोत्रोत्पन्नः अमुक...नामाहं (अमुकशर्मा वर्मा गुप्तो दासोहं ) भगवत्कैङ्कर्यरूपेण भगवदाज्ञया भगवन्मुखोल्लासार्थम् मम अमुककर्मणो निर्विघ्न परिसमाप्त्यर्थं विष्वक्सेनादिपूजन पूर्वक अमुककर्मणि कृताकृतावेक्षण रूप बह्मकर्मकर्तुम् अमुकामुकगोत्रान् अमुकामुकशर्मणो ब्राह्मणानेभिर्द्रव्यैःतत्तत्कर्मकरणार्थमहं वृणे ।
ब्राह्मणाश्च वृतास्म इति ब्रूयुः ।

## अथ विष्वक्सेनपूजनम्

वोहोता(दुना)मा चामलराखेर सातवटाकुशको कुर्चराखी त्यसकुर्चमा विष्वक्सेनको आवाहनगरी पूजागर्ने–

विश्वकर्मन्नितिसूक्तस्य शासऋषिःत्रिष्टुप्छन्दोविश्वकर्मा विष्वक्सेनोदेवता विष्वक्सेनपूजने विनियोगः ।

ॐ व्विश्वकर्मन्हविषावावृधानःस्वयंय्यजस्वपृथिवीमुतद्याम् ।
मुह्यन्त्वन्येऽअभितःसपत्नाऽइहास्माकम्मघवासूरिरस्तु । शु.य.१७ ।२२

ॐ वाचस्पतिं विश्वकर्माणमूतये मनोजुवंव्वाजेऽअद्याहुवेम ।
सनोविश्वानि हवनानि जोषद्विश्श्वशम्भूरवशे साधुकर्मा ॥
शु.य.१७ ।२३

ॐ विश्वकर्म्मन्हविषा वर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् ।
तस्मै विशःसमनमन्तपूर्व्वीरयमुग्ग्रोव्विहव्योषथासत् ॥ शु.य.१७।२४

आवाहयामि सेनेशं सर्वविघ्नविनाशकम् ।
सूत्रवत्यासमेतञ्च ब्रह्माण्डपरिपालकम् ॥

ॐ सूत्रवतीसहिताय श्रीमते विष्वक्सेनाय नमः । सूत्रवती सहितं श्रीमन्तं विष्वक्सेनम् आवाहयामि स्थापयामि पूजयामि ।

ॐ सूत्रवतीसहिताय श्रीमते विष्वक्सेनाय नमःहस्तयोरर्घ्यंसमर्पयामि ।

ॐ सूत्रवतीसहिताय श्रीमते विष्वक्सेनाय नमः पादयोःपाद्यं समर्पयामि

ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमःमुखे आचमनीयंसमर्पयामि
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमःसर्वाङ्गे स्नानीयं समर्पयामि

ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः पञ्चामृतेन स्नापयामि

ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः शुद्धोदकेन स्नापयामि

ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमःवस्त्रं समर्पयामि

ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः यज्ञोपवीतं समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः उपवस्त्रं समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः गन्धं समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः अक्षतान् समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः पुष्पाणि समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः पुष्पमालां समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः सुगन्धितद्रव्यं समर्पयामि ।

ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः धूपं आघ्रापयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः दीपं दर्शयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः नैवेद्यं निवेदयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः आचमनीयं समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः सफल ताम्बूलं समर्पयामि
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः दक्षिणाद्रव्यं समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमः प्रदक्षिणां समर्पयामि ।
ॐसूत्रवतीसहितायश्रीमते विष्वक्सेनाय नमःमन्त्रपुष्पाञ्जलिं समर्पयामि

यसरी पूजन गरी प्रार्थना गर्ने–

ॐ विष्वक्सेनाय विद्महे वेत्रहस्ताय धीमहि तन्नोसेनेशः प्रचोदयात्।

अब विष्वक्सेनको आठै दिशामा वहाँका पार्षदहरुलाई आग्नेयादिक्रमले आवाहनगरी पूजन गर्ने–

ॐ गं गजाननाय नमः गजाननमावाहयामि स्थापयामि पूजयामि ।
ॐ जं जयत्सेनाय नमः जयत्सेनमावाहयामि स्थापयामि पूजयामि ।

ॐ हं हरिमुखाय नमः हरिमुखमावाहयामि स्थापयामि पूजयामि ।
ॐ कं कालप्रकृतयेनमः कालप्रकृतिमावाहयामि स्थापयामि पूजयामि ।

ॐ बं बलाय नमः बलमावाहयामि स्थापयामि पूजयामि ।
ॐ प्रं प्रबलाय नमः प्रबलमावाहयामि स्थापयामि पूजयामि ।
ॐ विं विनायकायनमःविनायकमावाहयामि स्थापयामि पूजयामि ।
ॐ विं विघ्नेशाय नमः विघ्नेशमावाहयामि स्थापयामि पूजयामि ।

ॐ नमोगणेब्भ्योगणपतिब्भ्यश्श्चवोनमोनमोव्व्रातेभ्यो व्व्रातपति ब्भ्यश्श्चवोनमो नमो गृत्सेब्भ्यो गृत्सपतिभ्यश्श्चवो नमो नमो व्विरू

पेभ्यो व्विश्वरूपेभ्यश्श्च वो नमो नमः सेनाब्भ्यः ॥

शु.य.१६ ।२५

यसरी मूलमन्त्रलेआवाहनगरी अर्घ्यादि उपचारद्वारापूजनगरेर हातमा पुष्पलिएर प्रार्थना गर्ने—

ॐ विघातं विघ्नानां विदधति गजास्य प्रभृतयः
सदस्या गीर्वाण प्रवरप्रणुता यस्य शततम् ।
रमाभर्तुः सेवा प्रणयनपरो यश्च सततं
स विष्वक्सेनो मे वितरतु मनोवाञ्छितप्रदः ॥

ॐ यस्य द्विरदवक्त्राद्या शासने स्थिरवृत्तयः ।
स मे वैकुण्ठसेनानि भूयात्सर्वत्र विघ्नहा ॥

विदधतु सुखं विष्वक्सेनस्य ते प्रथमे भटाः ।
गजमुखजयत्सेनौ कालाह्वसिंहमुखौ च नः ॥

जगति भजतां तत्तत्प्रत्युहतूलदवानलाः

दिशिदिशि दिवारात्रं श्रीयज्ञपालनतत्पराः ॥

यसरी सपरिवार विष्वक्सेनको पूजागरेर साष्टाङ्गप्रणामगरी पुण्याहवाचन गर्ने—

## अथ पुण्याहवाचनम्

हेमाद्रि संभवं कुम्भं मन्त्राद्भिः क्षालितान्तरम् ।

चन्दनागरु कर्पूर धूपितं शोभनाकृतिम् ॥

आवेष्ठिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना ।

अर्चितं गन्धपुष्पाद्यैः कूर्चासन समन्वितम् ॥

नारिकेलयुतं पञ्चपल्लवैः समलंकृतम् ।

नवरत्नोदकं मन्त्रीस्थापयेत्तारमुच्चरन् ॥

आग्नयकोणमा एउटाकलश पुण्याहवाचनकालागि अलंकृतगरी राखेर पुण्याहवाचनकालागि चारजना ब्राह्मणहरुलाइ हातमाकुश दिएरआफ्नाअगाडी बसालेर पूजा गर्ने–

यजमानले भन्ने– पुष्पाणिपान्तु । ब्राह्मणले उच्चारण गर्ने– सौमनस्यमस्तु । यजमानले– अक्षतापान्तु । ब्राह्मणले – अरिष्टमक्षतं चास्तु ।

यजमानले–गन्धाः पान्तु । ब्राह्मणले–सौमङ्गल्यमस्तु ।

यजमानले– सफलताम्बूलानि पान्तु । ब्राह्मणले– ऐश्वर्यमस्तु ।

यजमानले– दक्षिणा पान्तु । ब्राह्मणले बहुदेयञ्चास्तु ।

यजमानले भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये । विप्राः वाच्यताम् ३ ।

हातमा कर्मपात्रको जल लिएर पहिलेजस्तै **देश काल** आदि सङ्कीर्तनगरी–

भगवदाज्ञया भगवत्प्रीत्यर्थं यागोपकरण गृह शरीरादिशुद्ध्यर्थं पुण्याहवाचनमहङ्करिष्ये (करिष्यामि) ।

यसरी सङ्कल्प गरी भूमीमा घुँडाटेकी हात जोडेर प्रार्थना गर्ने–

यजमानले उच्चारण गर्ने–

व्रतजपतपःस्वाध्यायक्रतुदयादानदमनियमसम्पन्नानां तत्र भवताम् ब्राह्मणानाम् मनः समाधीयताम् । ब्राह्मणले– समाहितमनसाःस्मः ।

यजमानले– प्रसीदन्तु भवन्तः ब्राह्मणले– प्रसन्नाःस्मः ।

यजमानले– भवद्भिरनुज्ञातः पुण्याहवाचनङ्करिष्ये

ब्राह्मणले–वाच्यताम् ३ ।

त्यसपछि घडालाई वायाँहातमाराखी दायाँ हातले छोपेर प्रार्थना गर्ने–

यजमानले भो ब्राह्मणाः! अस्य मम गृहे अमुक कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ३ । ब्राह्मणलेभन्ने– ॐ पुण्याहमस्तु ३

ॐ पुनस्त्वादित्त्यारुद्द्राव्वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेनत्वन्तन्वंवर्द्धयस्व सत्त्याःसन्तुय्यजमानस्य कामाः ॥

शु.य.१२ । ४४

यजमानले– भो ब्राह्मणाः अस्य अमुक कर्मणः स्वस्ति भवन्तो ब्रुवन्तु । ब्राह्मणलेभन्ने– ॐ स्वस्तिरस्तु ३

ॐस्वस्तिनऽइन्द्रोव्वृद्धश्रवाः स्वस्तिनःपूषाव्विश्ववेदाः ।

स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पितिर्द्दधातु ।

शु.य.२५ । १९

यजमानले– भो ब्राह्मणाः अस्य अमुक कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु । ब्राह्मणलेभन्ने– ॐ ऋद्धिरस्तु ३

ॐ ऋध्यामस्तोमं सनुयाम वाजमानो मन्त्रं सरथे होपयातम् ।
यशोनपक्वम्मधुगोष्वन्तरा भूतांशोऽअश्विनो कामप्राः ॥

अब सवै ब्राह्मणले उच्चारणगर्ने–

ॐ शान्तिरस्तु ॐ पुष्टिरस्तु ॐ तुष्टिरस्तु ॐ ऋद्धिरस्तु

ॐ अविघ्नमस्तु ॐ आयुष्यमस्तु ॐ आरोग्यमस्तु

ॐ धनधान्यसमृद्धिरस्तु ॐ गोब्राह्मणेभ्यःशुभमस्तु

ॐ सर्वशोभनमस्तु ॐ सर्वासम्पदः सन्तु ॐ शुभानि वर्धन्ताम्
ॐ शान्तिः । ॐ शान्तिः । ॐ शान्तिः

अब यजमानका हातमा अथवा भूमीमा राखिएको पुण्याहकलशलाई ब्राह्मणहरुले आफ्नाहातमाभएको कूशको अग्रभागले स्पर्शगरेर तलका मन्त्र उच्चारण गरी अभिमन्त्रण गर्ने–

पहिला वरुणसूक्त एवं पवमानसूक्तले अभिमन्त्रण गरी पाञ्चरात्रागमका मन्त्रहरुद्वारा अभिमन्त्रण गर्ने–

## वरुणसूक्तम्

ॐ हिरण्यवर्णाःशुचयःपावकायासुजातः सवितायास्वग्निः ।
याऽअग्निं गर्भं दधिरे सुवर्णास्तान आपःश गूँ स्योना भवन्तु ॥

ॐ यासा गुँ राजावरुणोयातिमध्ये सत्यानृतेऽअवपश्यञ्जनानाम् ।
याऽअग्निं गर्भं दधिरे सुवर्णास्तान आपःश गूँ स्योना भवन्तु ॥

ॐ यासां देवा दिवि कृण्वन्ति भक्षं याऽअन्तरिक्षे बहुधा भवन्ति ।
याऽअग्निं गर्भं दधिरे सुवर्णास्तानऽआपः श गूँ स्योना भवन्तु ॥

ॐ शिवेन मा चक्षुषापश्यतापःशिवयातन्वोपस्पृश तत्वञ्चमे ।
घृतश्चुतः शुचयो याः पावकास्तान आपः श गूँ स्योना भवन्तु ॥

ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जे दधातन । महेरणायचक्षसे ॥

ॐ योवः शिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥

ॐ तस्माऽअरङ्गमामवोयस्यक्षयाजिन्वथ । आपोजनयथाचनः ॥

शु.य.११ । ५०–५२

ॐ चित्पतिर्म्मापुनातुव्वाक्पतिर्मापुनातु देवोमासविता पुनात्त्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः । तस्यतेपवित्रपते पवित्रपूतस्य यत्कामःपुनेतच्छकेयम् ॥ शु.य.४ । ४

## पवमानसूक्तम्

ॐ पवमानस्सुवर्जनःपवित्रेण विचर्षणिः । यः पोतास पुनातु माम् ॥

पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वेदेवाः पुनीत मा जातवेदः पुनीहि माम् ।

पावमानीः स्वस्त्ययनीः सुदुघाहि घृतश्च्युतः । ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥

पावमानिर्दिशन्तुन इमं लोक अथो अमुम् । कामान्समर्धयन्तु नो देवीर्देवैः समाहिता ॥

येन देवाः पवित्रेण आत्मानं पुनते सदा ।

तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥

प्राजापत्यं पवित्रं शतोद्यामं गूँ हिरण्मयम् ।

तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीहि मे ॥

इन्द्रः पुनीतिः सहमा पुनातु सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मा जातवेदामूर्जयन्त्या पुनातु ॥

यन्मे गर्भे वसतःपापमुग्रं यज्जायमानस्य च किञ्चिदन्यत् ।
जातस्य यश्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥

ब्रह्म बधात् सुरापानात् स्वर्णस्त्येयाद् वृषलीमैथुनसङ्गमात् ।
गुरो दाराऽधिगमाच्च तत्पावमानीभिरहं पुनामि ॥

दुर्यष्टं दुरधीतं पापं यच्चाज्ञानकृतोऽकृतम् ।
अयाजिताश्चासंयाज्यास्तत्पावमानीभिरहं पुनामि ॥

पावमानीःस्वस्त्ययनीर्याभिर्गच्छन्ति नान्दनम् ।
पुण्यांश्च भक्ष्यान्भक्षयत्यमृतत्वञ्च गच्छति ॥

पावमानीः पितृन्देवान्ध्यायेद्यश्च सरस्वतीम् ।
पितृंस्तस्योपवर्तेत क्षीरं सर्पिमधूदकम् ॥

पावमानं परं ब्रह्म शुक्रञ्ज्योतिः सनातनम् ।
ऋषींस्तस्योपतिष्ठेत क्षीरं सर्पिमधूदकम् ॥

पावमानं परं ब्रह्म ये पठन्ति मनीषिणः ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥

## पाञ्चरात्रागम मन्त्राः

ॐ दर्भैस्पृशन्तु कलशं ब्राह्मणैः सह देशिकः ।

ततश्च शुद्धिमन्त्राँस्तु पठेदेवं समाहितः ॥१॥

शुद्धयेस्तु परो देवो वासुदेवोऽस्तु शुद्धये ।
सङ्कर्षणःशुद्धयेऽस्तु प्रद्युम्नश्चास्तु शुद्धये ॥२॥

शुद्धयेऽस्त्वनिरुद्धोऽपि केशवश्चास्तु शुद्धये ।
नारायणोऽस्तु विश्वेश शुद्धये सर्वकर्मणाम् ॥३॥

शुद्धये माधवश्चास्तु सर्वलोकहितेरतः ।
गोविन्दःशुद्धयेचास्तु परमात्मा सनातनः ॥४॥

शुद्धये विष्णुरस्त्वाद्य शुद्धये मधुसूदनः ।
सर्वलोकहितो देवः शुद्धयेऽस्तु त्रिविक्रमः ॥५॥

वामनःशुद्धयेचास्तु श्रीधरोऽद्यास्तु शुद्धये ।
शुद्धयेऽस्तु हृषीकेशः पद्मनाभोऽस्तु शुद्धये ॥६॥

सदा दामोदरो देवः शुद्धयेऽस्तु जगत्पतिः ।
शुद्धये पद्मनाभोऽस्तु शुद्धयेऽस्तु सदा ध्रुवः ॥६॥

अनन्तः शुद्धये चास्तु शक्त्यात्मा चास्तु शुद्धये ।
सर्वकर्मसु चैवास्तु शुद्धये मधुसूदनः ॥७॥

सदा विद्याधिदेवोऽस्तु शुद्धये कपिलस्तथा ।
शुद्धये विश्वरूपोऽस्तु शुद्धयेऽस्तु विहङ्गमः ॥८॥

क्रोडात्मा शुद्धयेचास्तु शुद्धये वडवानलः ।
शुद्धयेऽस्तु सदा धर्मश्चास्तु वागीश्वरस्तथा ॥९॥

देव एकार्णवशयःशुद्धयेऽस्तु निरन्तरम् ।
शुद्धयेऽस्तु सदा देवःकूर्मःपातालधारकः ॥१०॥

वाराहः शुद्धयेचास्तु नारसिंहोऽस्तु शुद्धये ।
अमृताहरणश्चास्तु शुद्धये सर्वकर्मणाम् ॥११॥

श्रीपतिःशुद्धये चास्तु शान्तात्मा चास्तु शुद्धये ।
शुद्धये राहुजिच्चास्तु कालनेमिघ्न एव च ॥१२॥

पारिजातहरश्चास्तु वामनश्चास्तु शुद्धये ।
सर्वत्र शुद्धयेचास्तु दत्तात्रेयो महाप्रभुः ॥१३॥

न्यग्रोधशायी भगवान् शुद्धये चास्तु सर्वदा ।
एकश्रृङ्गतनुश्चास्तु वामनश्चास्तु शुद्धये ॥१४ ॥

त्रिविक्रमः शुद्धयेऽस्तु शुद्धयेस्तु नरस्सदा ।
नारायणःशुद्धयेऽस्तु हरिःकृष्णश्च शुद्धये ॥१५॥

ज्वलत्परशुधृग्रामःशुद्धयेऽस्तु धनुर्धरः ।
रामश्च शुद्धये चास्तु वेदविद्भगवाँस्तथा ॥१६॥

शुद्धयेऽस्तु सदा कल्की सर्वदोषक्षयङ्करः ।
शुद्धयेऽस्तु सदादेवः पातालशयनः प्रभुः ॥१७ ॥

शुद्धये सन्तु सर्वेषां सर्वे सर्वत्र सर्वदा ।
एते सर्वे सदा देवाः शान्तये सन्तु पूजिताः ॥१८॥

ऋद्धये पुष्टये सन्तु सिद्धये भक्तयेऽपि च ।

शिवाय मुक्तये सन्तु वृद्धये सर्वकर्मणाम् ॥१९॥

मन्त्राणां देशिकानाञ्च स्थानानामपि सर्वदा ।
पुत्रमित्रकलत्राणां दासीदासगवामपि ॥२०॥

वेदशास्त्रागमादीनां व्रतानामिष्टसम्पदाम् ।
मनोरथानां सर्वेषां हितानां सन्तु सर्वदा ॥२१॥

आयुरारोग्यमेधानां धनधान्यादिसम्पदाम् ।
पुण्यानामणिमादीनां गुणानां श्रेयसामपि ॥ २२ ॥

राज्ञो जनपदस्यापि यजमानस्य मन्त्रिणाम् ।
वैष्णवानां विशेषेण परत्र हितमिच्छताम् ॥२३॥

पञ्चकालविशुद्धानां सत्वस्थानां शुभात्मनाम् ।
स्वस्त्यस्तु च शिवञ्चास्तु शुभंचास्तु पुनः पुनः ॥२४॥

अविघ्नमनिशञ्चास्तु दीर्घमायुष्यमस्तु वै ।
समाहित मनश्चास्तु सम्पदश्चोत्तरोत्तरम् ॥२५॥

पुण्याहं शुद्धयेचास्तु वासुदेवादि मूर्तयः ।
शङ्खचक्रगदापद्मयुक्तः सर्वेश्वरेश्वरः ॥२६ ॥

प्रीयतां भगवान्देवो लाङ्गली प्रीयतां सदा ।
प्रद्युम्न प्रीयतां नित्यमनिरुद्धः सुरेश्वरः ॥२७॥

नारायणःसुरेशोऽपि कर्मणां पूरणाय च ।
न्यूनाधिकानां शान्त्यर्थं प्रीयतां प्रीयतां विभुः ॥२८॥

पुण्याहं स्वस्ति ऋद्धिं च संवाच्य सहितो द्विजैः ।

आत्मानं प्रोक्षयेत् पश्चाद्यागोपकरणानि च ॥२९॥

**येन देवाःपवित्रेण**त्यादि मन्त्रान्पठन्गुरुः ।
एवं सर्वेषु यागेषु कुर्यात्पुण्याहवाचनम् ॥३०॥

यसरी पुण्याहवाचन गरेर त्यहीजलले आम्रपल्लव र कूशकोकूर्चले तलको वास्तुसूक्त उच्चारणगर्दै आफू र यज्ञमण्डप एवं घरभित्र बाहिर चारैतिर घण्टावादनपूर्वक प्रोक्षण गर्ने–

ॐ येन देवाः पवित्रेण आत्मानं पुनते सदा ।

तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥

## अथ वास्तुसूक्तम्

ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः ।
यत्त्वेमहे प्रतितन्नोजुषस्व शन्नोभव द्विपदे संचतुष्पदे ॥

ॐ वास्तोष्पते प्रतरणोनऽएधि गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्येस्याम पितेव पुत्रान्प्रतितन्नोजुषस्व ॥

ॐ वास्तोष्पते शग्मया संसदाते सक्षीमहिरण्मया गातु मत्या ।
पाहि क्षेमऽउतयोगेवरन्नो यूयं पात स्वस्तिभिः सदानः ॥

ॐ अमीवहावास्तोष्पते विश्वारूपाण्याविशन् ।
सखा सुसेवऽएधिनःशन्नो भव द्विपदे शञ्चतुष्पदे ॥

अब **भगवदाराधना**कानिमित्त पूजनसामाग्री तथा पञ्चकटौरीहरु तयारगरी संहार एवं सृष्टिन्यास गर्ने–

## अथ संहारन्यासः (अर्चक आफैंले गर्ने)

ॐ लां नमःपराय सर्वात्मने नारायणाय नमः— पाउमा स्पर्शगर्ने ।
ॐ वां नमःपराय निवृत्यात्मनेऽनिरुद्धाय नमः गुह्यमा स्पर्श गर्ने ।
ॐ रां नमःपराय विश्वात्मने प्रद्युम्नाय नमः हृदयमा स्पर्श गर्ने ।
ॐ यां नमःपराय पुरुषात्मने संकर्षणाय नमः नासिकामा स्पर्श गर्ने ।
ॐ षां नमःपराय परमेष्ठ्यात्मने वासुदेवाय नमः शीरमा स्पर्श गर्ने ।

यी पाँच मन्त्रद्वारा प्राकृतपञ्चतत्वको संहारभएको सम्झेर, अगाडीका पाँचमन्त्र द्वाराभगवान्को ध्यानले दिव्यतत्वकोउत्पत्तिगराइ त्यहि दिव्यतत्वले श्रीभगवदा—राधना गर्न योग्यभएको दिव्यदेहप्राप्ति भएको भावना गर्नु —

## अथ सृष्टिन्यासः

ॐ षां नमःपराय परमेष्ठ्यात्मने वासुदेवाय नमः शीरमा स्पर्श गर्ने ।

ॐ यां नमः पराय पुरुषात्मने संकर्षणाय नमः नासिकामा स्पर्श गर्ने ।
ॐ रां नमःपराय विश्वात्मने प्रद्युम्नाय नमः हृदयमा स्पर्श गर्ने ।
ॐ वां नमःपराय निवृत्यात्मनेऽनिरुद्धाय नमः गुह्यमा स्पर्श गर्ने ।
ॐ लां नमःपराय सर्वात्मने नारायणाय नमः पाउमा स्पर्श गर्ने ।

अब गुरुपरम्पराको अनुसन्धानपूर्वक सेवाप्रारम्भ गर्ने—

लक्ष्मीनाथ समारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्देगुरुपरम्पराम् ॥

संसारसिन्धोस्तरणैकहेतून्दधे गुरून्मूर्ध्नि हरिस्वरूपान् ।
रजांसि येषां पदपङ्कजानां तीर्थाभिषेकश्रियमावहन्ति ॥

स्वशेषभूतेनमया स्वीयैः सर्वपरिच्छदैः ।
विधातुम्प्रीतमात्मानं देवः प्रक्रमते स्वयम् ॥

कूर्मादीन्दिव्यलोकांस्तदनुमणिमयम्मण्डपं तत्र शेषम् ।
तस्मिन्धर्मादिपीठं तदुपरिकमलं चामरग्राहिणींश्च ॥
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं ।
सेनेशं द्वारपालान् कुमुदमुखगणान् विष्णुभक्तान्प्रपद्ये ॥

यसरी गुरुपरम्परा र भगवानकापरिवारहरुको ध्यानगरी भगवानको षोडशोपचारले आराधना गर्ने –

पहिले वलमन्त्रको अनुसन्धानगर्ने–

भगवतोबलेन भगवतोवीर्येण भगवतस्तेजसा भगवतः कर्म करिष्यामि । भगवानेवस्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेन मया स्वकीयैश्च उपकरणैः स्वाराधनैकप्रयोजनाय परम पुरुषः सर्वशेषी सर्वेश्वरः स्वयमेव स्वशेषभूतमिदममुकनामाख्यां स्वसमाराधनां कारयति ॥

यो बलमन्त्रकोअनुसन्धानगरेर त्यसपछी पुरुषसूक्तको मन्त्रउच्चारणपश्चात् तलका श्लोकउच्चारणगरेर त्यसपछि  उत्तरवाक्यभन्दै उपचारदिने(पूजनगर्ने)

## पुरुषसूक्तषोडशन्यासोपचार विधिः

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे ।
सहस्रनाम्ने पुरुषायशाश्वते सहस्रकोटीयुगधारिणे नमः ॥

**श्रीमते नारायणाय नमः** ध्यायामि । भनेर ध्यानगर्ने

ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।
सभूमि गूँ सर्व्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ शु.य.३१ । १

आवाहयाम्यमरवृन्दनतांघ्रियुग्मम्
लक्ष्मीपतिम्भूवनकारणमप्रमयेम् ।
आद्यं सनातनतनुम्प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्रदीप्तिम् ॥

**श्रीमते नारायणाय नमः । श्रीमन्नारायणम् आवाहयामि स्थापयामि पूजयामि** भनेर आवाहन गर्ने ।

ॐ पुरुषऽएवेद गूँ सर्वंय्यद्भूतंय्यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ शु.य.३१ । २

सद्रत्नजाम्बूनदनिर्मितम्विभो वरासनं सर्ववरप्रदायते ।
समर्पये सर्वजगन्निवासिने सुनिर्मलज्ञानधनप्रदायिने ॥

**श्रीमतेनारायणायनमः आसनं समर्पयामि** भनेर आसन(पुष्प अथवा तुलसी) राख्ने ।

ॐ एतावानस्य महिमातोज्ज्यायाँश्च पूरुषः ।
पादोस्य व्विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥ शु.य.३१ । ३

यः सर्वलोकस्य समाश्रयश्च , पूज्यश्च मान्यश्च दिवौकसामपि ।
गृह्णातु सोऽर्घ्यं परिपूर्णकामः, प्रसीदताम्ब्रह्ममहाविभूतिभिः ॥

**श्रीमतेनारायणायनमः हस्तयोःअर्घ्यं समर्पयामि** । भनेर अर्घ्य जल समर्पणगर्ने ।

ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततो विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥ शु.य.३१ । ४

यो राजते यज्ञपतिश्च यज्ञ , सर्वस्य लोकस्य शरण्यभूतः ।
यज्ञेश्वरो यज्ञवपुश्च विष्णुः , पाद्यम्प्रगृह्णातु स वासुदेवः ॥

**श्रीमतेनारायणायनमः पादयोःपाद्यं समर्पयामि** । भनेर पाद्य जल समर्पणगर्ने ।

ॐ ततोव्विराडजायतव्विराजोऽअधिपूरुषः ।
सजातोऽअत्यरिच्यतपश्चाद्भूमिमथो पुरः ॥ शु.य.३१ । ५

योऽसौ भवान्सर्वजगत्प्रधानो , यस्य प्रसादेन भवन्ति लोकाः ।
स त्वं कुरुष्वाचमनं वरेण्यं , भव प्रसन्नो मयि दीननाथ ॥
**श्रीमतेनारायणायनमः मुखे आचमनीयं समर्पयामि** । भनेर आचमनीय जल समर्पणगर्ने ।

ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्यम् ।
पशूँस्ताँश्चक्क्रेव्वायव्व्यानारण्याग्राम्याश्च ये ॥ शु.य.३१ । ६

समाहृतैः स्वर्णघटैश्चस्वच्छैः , स्वर्लोकस्रोतस्विनि दिव्यतीर्थैः ।
स्नानं कुरुष्वाच्युतदिव्यमूर्ते , देवाग्रजानान्निधनं प्रदायिन् ॥

**श्रीमतेनारायणायनमः स्नानं समर्पयामि** । भनेर स्नानीय जल समर्पणगर्ने ।

(यदि पञ्चामृतले स्नानगराउनेभएमा अगाडीका विधिद्वारा गर्ने—)

ॐ सन्तेपया गूँ सि समुयन्तुवाजाः सम्वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानोऽअमृतायसोमदिविश्रवा गूँ स्युत्तमानिधिष्व ॥
**श्रीमतेनारायणायनमः दुग्धस्नानं समर्पयामि** । भनेर दुधले स्नानगराउने ।

ॐ इतोन्विन्द्रंस्तवाम शुद्धं शुद्धेनसाम्ना ।

शुद्धैरुक्थैवावृधासं शुध्या आशीर्वान्ममत्तु ॥

**श्रीमतेनारायणायनमः शुद्धोदकस्नानं समर्पयामि** । भनेर शुद्धजलले स्नानगराउने ।

ॐ दधिक्राब्णोऽअकारिषञ्जिष्णोऽरश्वस्यवाजिनः ।
सुरभिनोमुखाकरत्प्रणऽआयु गूँ षितारिषत् ॥ शु.य.२३ ।३२

**श्रीमतेनारायणायनमः दधिस्नानं समर्पयामि** । भनेर दहीले स्नानगराउने ।

ॐ इतोन्विन्द्रंस्तवाम शुद्धं शुद्धेनसाम्ना ।

शुद्धैरुक्थैवावृधासं शुध्या आशीर्वान्ममत्तु ॥

**श्रीमतेनारायणायनमः** दधिस्नानान्ते **शुद्धोदकस्नानं समर्पयामि** । भनेर शुद्धजलले स्नानगराउने ।

ॐ तेजः पशूनां हविरिन्द्रियावत्परिश्रुता पयसासारघंमधु ।
अश्विभ्यां दुग्धम्भिषजा सरस्वत्या सुता सुताभ्याममृतसोम इन्दुः ॥
**श्रीमतेनारायणायनमः घृतस्नानं समर्पयामि** । भनेर घीउले स्नानगराउने ।

ॐ इतोन्विन्द्रंस्तवाम शुद्धं शुद्धेनसाम्ना ।

शुद्धैरुक्थैवावृधासं शुध्या आशीर्वान्ममत्तु ॥

**श्रीमतेनारायणायनमः** घृतस्नानान्ते **शुद्धोदकस्नानं समर्पयामि** । भनि शुद्धजलले स्नानगराउने ।

ॐ मधुव्वाताऽऋतायते मधुक्षरन्तिसिन्धवः । माद्ध्वीर्नः सन्तोषधीः ।

ॐ मधुनक्तमुतोषसो मधुमत्पार्थिव गूँ रजः । मधुद्यौरस्तुनः पिता ॥

ॐ मधुमान्नोवनस्पतिर्मधुमाँ२अस्तुसूर्य्यः । माध्वीर्गावोभवन्तु नः ॥

शु.य.१३ । २७–२८–२९

**श्रीमतेनारायणायनमः मधुस्नानं समर्पयामि** । भनेर महले स्नानगराउने ।

ॐ इतोन्विन्द्रंस्तवाम शुद्धं शुद्धेनसाम्ना ।
शुद्धैरुक्थैवावृधासं शुध्या आशीर्वान्ममत्तु ॥

**श्रीमतेनारायणायनमः** मधुस्नानान्ते **शुद्धोदकस्नानं समर्पयामि** । भनि शुद्धजलले स्नानगराउने ।

ॐ ताः शर्कराऽअभवंस्तच्छर्कराणां शर्करात्वं ।
पशुरग्निर्यच्छर्कराभिरग्निम् । परिमृणोति वज्रेणैवास्मिन्पशू
न्परिदधाति ॥

**श्रीमतेनारायणायनमः शर्करास्नानं समर्पयामि** । भनेर शक्खरले स्नानगराउने ।

ॐ इतोन्विन्द्रंस्तवाम शुद्धं शुद्धेनसाम्ना ।
शुद्धैरुक्थैवावृधासं शुध्या आशीर्वान्ममत्तु ॥

**श्रीमतेनारायणायनमः** शर्करास्नानान्ते **शुद्धोदकस्नानं समर्पयामि** । भनि शुद्धजलले स्नानगराउने ।

ॐ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे ।
छन्दा गूँ सिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ शु.य.३१ । ७

शुद्धस्त्वमात्मा पुरुषः पुराणो , जगत्सुतत्वं सुरलोकनाथ ।
वस्त्राणि गृह्णीष्वमयार्पितानि ,दूकूलकौशेयसुपट्टकानि ॥
**श्रीमतेनारायणायनमः वस्त्रं समर्पयामि** । भनेर वस्त्र समर्पणगर्ने ।

ॐ तस्मादश्श्वाऽअजायन्तयेकेचोभयादतः ।
गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ शु.य.३१ । ८

कार्पासतन्तूद्भवब्रह्मसूत्रं , सूत्रात्मने सर्वचराचरस्य ।
समर्पये सात्वतपुङ्गवाय , तेजः स्वरूपाय सुखप्रदाय ॥
**श्रीमतेनारायणायनमः यज्ञोपवीतं समर्पयामि** । भनेर यज्ञोपवीत समर्पणगर्ने ।

ॐ तं यज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्रतः ।
तेन देवाऽअयजन्त साध्या ऋषयश्चये ॥ शु.य.३१ । ९

आनन्दनो योऽसुमतां परात्मा , तापत्रयस्योपशमश्च यस्मात् ।
तस्मै प्रयच्छामि सुचन्दनं वै , काश्मीर कर्पूरविभावितं च ॥

**श्रीमतेनारायणायनमः चन्दनं समर्पयामि** । भनेर चन्दन समर्पणगर्ने ।

ॐ यत्पुरुषं व्यदधुः कतिधाव्व्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्यते ॥ शु.य.३१ । १०

यःसर्वगन्धोखिलविश्वरूप , तस्मै प्रसूनानि समर्पयामि ।
कदम्बजाती वकुलोद्भवानि , कुशेशय श्रीतुलसी दलानि ॥

**श्रीमतेनारायणायनमः पुष्पाणि समर्पयामि** । भनेर पुष्प समर्पणगर्ने ।

ॐ ब्राह्मणोस्य मुखमासीद्बाहूराजन्यः कृतः ।
ऊरूतदस्ययद्वैश्यःपद्भ्या गूँ शूद्रोऽअजायत ॥ शु.य.३१ । ११

धूपं दशाङ्गं शुभगन्धकञ्च , गोसर्पिषाक्तं हृदयप्रियञ्च ।
समर्पये दिव्यनभास्पदाय , क्षीराब्धिजासेवित सत्पदाय ॥

**श्रीमतेनारायणायनमः धूपं आघ्रापयामि** । भनेर सुगन्धित धूप समर्पणगर्ने ।

ॐ चन्द्रमा मनसोजातश्चक्षोः सूर्योऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ शु.य.३१ । १२

आदित्यचन्द्राग्निप्रकाशकाय वै , सदा चिदानन्दमयाव्ययाय च ।
स्वाज्येन युक्तं शुभवर्तिभूषितं , दीपम्प्रयच्छामि तमः प्रणाशकम् ॥

**श्रीमतेनारायणायनमः दीपं दर्शयामि** । भनेर दीप समर्पणगर्ने ।

त्यसपछि चार चार तोला– घिउ,दहि,मह,र थोरैकपूर मिलाइएको मधुपर्क भगवानलाई निवेदन गर्ने –

यौऽसौभवांस्तिष्ठति सर्वदेहे , नारायणःसर्वजगत्प्रधानः ।
गृहाण चैवं सुरलोकनाथ , भक्तोपनीतं मधुपर्कसंज्ञम् ॥
**श्रीमतेनारायणायनमः मधुपर्कं निवेदयामि** । भनेर मधुपर्क समर्पणगर्ने ।

ॐ नाभ्याऽआसीदन्तरिक्ष गूँ शीर्ष्णोद्यौः समवर्त्तत ।
पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ ३ अकल्पयन् ॥ शु.य.३१ । १३

द्विजस्त्रीणां भक्ते मृदुनि विदुरान्ने व्रजगवां ,
दधिक्षीरे सख्युः स्फुटचिपिटमुष्टौ मुररिपो ।
यशोदायास्तन्ये व्रजयुवतिदत्ते मधुनि ते
यथासीदामोदस्तमयमुपहारेऽपि कुरुताम् ॥
**श्रीमतेनारायणायनमः नैवेद्यं निवेदयामि** । भनेर नैवेद्य समर्पणगर्ने ।

ॐ यत्पुरुषेण हविषा देवायज्ञमतन्वत ।
व्वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मः शरद्धविः ॥ शु.य.३१ । १४
एलादिपूगीफल चन्द्रसंयुतं , प्रशस्तदेशोद्भवसौरभास्पदम् ।
ताम्बूलपत्रम्भगवन्समर्पये , भवप्रवाहोपरमायतेच्युत ॥
**श्रीमतेनारायणाय नमः ताम्बूलं समर्पयामि** । भनेर पान ताम्बूल समर्पणगर्ने ।

ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ।
देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ शु.य.३१ । १५

सुवर्तिकर्पूर विदीपितेन , सुवर्णपात्रे विनियोजितेन ।
नीराजयेत्वामहमप्रमेय , दिव्येन दीपेन दिवप्रदेन ॥

**ॐ श्रीमतेनारायणाय नमः नीराजनं समर्पयामि ।** भनेर आरती गर्ने ।

(यहाँ समय र स्थान हेरी अन्य आरतीका श्लोकहरु पनि गाउँन सकिन्छ)

ॐ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन् ।
तेह नाकम्महिमानः सचन्त यत्र पूर्व्वेसाध्याः सन्ति देवाः ॥

## मन्त्रपुष्पाञ्जलिः

हरिःॐ तद्विष्णोःपरमम्पद गूँ सदापश्यन्ति सूरयः । दिवीव चक्षुराततम् ।

तद्विप्प्रासो विपन्न्यवो जागृवा गूँ सः समिन्धते । विष्णोर्र्यत्पर मम्पदम् ॥ शु.य.३४ । ४४

पर्याप्त्याऽनन्तरायाय सर्वस्तोमोतिरारात्र उत्तममहर्भवति सर्वस्याप्त्यै सर्वस्यजित्यै सर्वमेव तेनाप्नोति सर्वं जयति ।
हरिःॐ शान्तिः ३ ।

सुगन्धवल्लीशतपत्रजाती सुवर्णचम्पावकुलोद्भवानि ।
गृहाण देवेश मयार्पितानि प्रभो हरे श्रीतुलसीदलानि ॥

ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

ॐ इषेत्वोर्ज्जेत्वा व्वायवस्थदेवोवः सविताप्प्रार्पयतुश्श्रेष्ठतमाय कर्म्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्रायभागं प्रजावतीरनमीवाऽअयक्ष्मा मावस्तेनऽईशतमाघस गूँ सोद्ध्रुवाऽअस्मिन्गोपतौ स्यातबह्वीर्य्यजमानस्यपशून्पाहि । शु.य.१ । १

ॐ अग्नऽ आयाहि वीतये गृणानो हव्य दातये।
निहोता सत्सि वर्हिषि ॥

ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये।
शंय्योरभिस्रवन्तुनः। शु.य.३६।१२

ॐ इत्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्युपरिष्टात्। ॐ इत्येकाक्षरम्। नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरम्पदं। यो ह वै नारायणस्याष्टाक्षरम्पद मध्येति। अनुपब्रुवः सर्वमायुरेति। विन्दते प्राजापत्यं रायस्पोषङ्गौ पत्यं ततोऽमृतत्वमश्नुते। ततोऽमृतत्वमश्नुत इति। य एवं वेद इत्युपनिषत्। नारायणोपनिषत् ३

ॐ उषा वा अश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षुर्वातः प्राणोव्यात्त मग्निर्वैश्वानरःसम्वत्सर आत्माऽश्वस्य मेध्यस्य। द्यौः पृष्ठमन्तरिक्ष मुदरं पृथिवीपाजस्यं दिशःपार्श्वेअवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाणि। अहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मा गूँ सानि। ऊवध्य गूँ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन् पूर्वार्धो निम्लोचञ्जघनार्धो तद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक्। ॐ शान्तिः ३ ॥

बृहदारण्यकोपनिषत् १ मन्त्र

## भगवानको२४ नामावलिः

१.ॐ केशवाय नमः । २. ॐ नारायणाय नमः

३.ॐ माधवाय नमः । ४. ॐ गोविन्दाय नमः

५. ॐ विष्णवे नमः । ६. ॐ मधुसूदनाय नमः

७. ॐ त्रिविक्रमाय नमः। ८. ॐ वामनाय नमः

९. ॐ श्रीधराय नमः ।१०. ॐ हृषीकेशाय नमः।

११.ॐ पद्मनाभाय नमः । १२.ॐ दामोदराय नमः।

१३.ॐवासुदेवाय नमः । १४.ॐसङ्कर्षणाय नमः।

१५.ॐप्रद्युम्नाय नमः । १६.ॐअनिरुद्धाय नमः।

१७.ॐपुरुषोत्तमाय नमः । १८.ॐअधोक्षजाय नमः।

१९.ॐनारसिंहाय नमः । २०.ॐअच्युताय नमः ।

२१.ॐजनार्दनाय नमः । २२.ॐउपेन्द्राय नमः ।

२३.ॐहरये नमः । २४.ॐश्रीकृष्णाय नमः।

## लक्ष्मीजीको १२ नामावलिः

१. ॐ श्रियै नमः । २. ॐ अमृतोद्भवायै नमः

३.ॐ कमलायै नमः । ४. ॐ चन्द्रसौंदर्यै नमः

५. ॐ विष्णुपत्न्यै नमः । ६. ॐ वैष्णव्यै नमः

७. ॐ वरारोहायै नमः । ८.ॐहरिवल्लभायै नमः

९. ॐ शार्ङ्गिण्यै नमः । १०.ॐदेवदेविकायै नमः

११. ॐलोकसुन्दर्यै नमः । १२. ॐ महालक्ष्म्यै नमः

१३.ॐ श्रीदेव्यै नमः । १४.ॐ भूदेव्यै नमः ।

१५.ॐनीलादेव्यै नमः । १६.ॐ गोदादेव्यै नमः

(समय भएमा श्रीकृष्णस्याष्टोत्तर तथा श्रीलक्ष्म्यष्टोत्तरशतनामावलि अर्चना गर्ने )

## श्रीकृष्णस्याष्टोत्तरशतनामावलिः

१.ॐ श्रीकृष्णाय नमः ।

२. ॐ कमलानाथाय नमः

३.ॐ वासुदेवाय नमः ।

४. ॐ सनातनाय नमः

५.ॐ वसुदेवात्मजाय नमः ।

६. ॐ पुण्याय नमः

७.ॐ लीलामानुषविग्रहाय नमः ।

८.ॐश्रीवत्सकौस्तुभधराय नमः

९.ॐ यशोदावत्सलाय नमः ।

१०. ॐ हरये नमः ।

११.ॐ चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदाधराय नमः ।

१२.ॐ देवकीनन्दनाय नमः

१३.ॐ श्रीशाय नमः

१४.ॐ नन्दगोपप्रियात्मजाय नमः ।

१५.ॐ यमुनावेगसंहारिणे नमः

१६.ॐ बलभद्रप्रियानुजाय नमः ।

१७.ॐ पूतनाजीवितहराय नमः

१८.ॐशकटासुरभञ्जनाय नमः ।

१९.ॐनन्दव्रजजनानन्दिने नमः

२०.ॐ सच्चिदानन्दविग्रहाय नमः ।

२१.ॐनवनीतविलिप्ताङ्गाय नमः ।

२२. ॐनवनीतनतटाय नमः

२३.ॐ अनघाय नमः ।

२४.ॐ नवनीतनवाहाराय नमः ।

२५.ॐ मुचुकुन्दप्रसादकाय नमः ।

२६.ॐ षोडशस्त्रीसहस्रेशाय नमः

२७.ॐ त्रिभङ्गीमधुराकृतये नमः ।

२८.ॐ शुकवागमृताब्धीन्दवे नमः ।

२९.ॐ गोविन्दाय नमः ।

३०.ॐ योगिनाम्पतये नमः ।

३१.ॐ वत्सवाटचराय नमः ।

३२.ॐ अनन्ताय नमः

३३.ॐ धेनुकासुरभञ्जनाय नमः ।

३४.ॐ तृणीकृततृणावर्ताय नमः

३५.ॐ यमलार्जुनभञ्जनाय नमः ।

३६.ॐ उत्तालतालभेत्त्रे नमः

३७.ॐ तमालश्यामलाकृतये नमः ।

३८.ॐ गोपगोपीश्वराय नमः

३९.ॐ योगिने नमः ।

४०.ॐ कोटिसूर्यसमप्रभाय नमः

४१.ॐ इलापतये नमः ।

४२.ॐ परञ्ज्योतिषे नमः

४३.ॐ यादवेन्द्राय नमः ।

४४.ॐ यदुद्वहाय नमः

४५. ॐ वनमालिने नमः

४६.ॐपीतवाससे नमः ।

४७.ॐ पारिजातापहारकाय नमः

४८.ॐ गोवर्धनाचलोद्धर्त्रे नमः ।

४९.ॐ गोपालाय नमः

५०.ॐसर्वपालकाय नमः

५१.ॐ अजाय नमः

५२.ॐ निरञ्जनाय नमः

५३.ॐ कामजनकाय नमः

५४.ॐ कञ्जलोचनाय नमः

५५.ॐ मधुघ्ने  नमः

५६.ॐ मथुरानाथाय नमः

५७.ॐ द्वारकानायकाय नमः ।

५८.ॐ बलिने नमः ।

५९.ॐ वृन्दावनान्तसंचारिणे नमः

६०.ॐ तुलसीदामभूषणाय नमः

६१.ॐ स्यमन्तकमणेहर्त्रे नमः

६२.ॐ नरनारायणात्मकाय नमः

६३.ॐ कुब्जाकृष्टाम्बरधराय नमः

६४.ॐ मायिने नमः

६५.ॐ परमपुरुषाय नमः

६६.ॐ मुष्टिकासुरचाणूरमल्लयुद्धविशारदाय नमः

६७.ॐ संसारवैरिणे नमः

६८.ॐ कंशारिणे नमः

६९.ॐ मुरारये नमः

७०.ॐ नरकान्तकाय नमः

७१.ॐ अनादिब्रह्मचारिणे नमः

७२.ॐ कृष्णाव्यसनकर्षकाय नमः

७३.ॐ शिशुपालशिरश्छेत्रे नमः

७४.ॐ दुर्योधनकुलान्तकाय नमः

७५.ॐ विदुराक्रूरवरदाय नमः

७६.ॐ विश्वरूपप्रकाशकाय नमः

७७.ॐ सत्यवाचे नमः

७८.ॐ सत्यसङ्कल्पाय नमः

७९.ॐ सत्यभामारताय नमः

८०.ॐ जयिने नमः

८१.ॐ सुभद्रापूर्वजाय नमः

८२.ॐ विष्णवे नमः

८३.ॐ भीष्ममुक्तिप्रदायकाय नमः

८४.ॐ जगद्गुरवे नमः

८५.ॐ जगन्नाथाय नमः

८६.ॐ वेणुनादविशारदाय नमः

८७.ॐ वृषभासुरविध्वंसिने नमः

८८.ॐ वाणासुरकरान्तकाय नमः

८९.ॐ युधिष्ठिरप्रतिष्ठात्रे नमः

९०.ॐ बर्हिबर्हावतंसकाय नमः

९१.ॐ पार्थसारथये नमः

९२.ॐ अव्यक्ताय नमः

९३.ॐ गीतामृतमहोदधये नमः

९४.ॐकालियफणमाणिक्यरञ्जितश्रीपदाम्बुजाय नमः

९५.ॐ दामोदराय नमः

९६.ॐ यज्ञभोक्त्रे नमः

९७.ॐ दानवेन्द्रविनाशकाय नमः

९८.ॐ नारायणाय नमः

९९.ॐ परब्रह्मणे नमः

१००.ॐ पन्नगाशनवाहनाय नमः

१०१. ॐ जलक्रीडासमासक्तगोपीवस्त्रापहारकाय नमः
१०२. ॐ पुण्यश्लोकाय नमः

१०३.ॐ तीर्थपादाय नमः

१०४.ॐ वेदवेद्याय नमः

१०५.ॐ दयानिधये

१०६.ॐ सर्वतीर्थात्मकाय नमः

१०७. ॐ सर्वग्रहरूपिणे नमः ।

१०८. ॐ परात्पराय नमः,

ॐश्री रुक्मिणीसत्यभामादिसहितश्रीकृष्णचन्द्र परब्रह्मणे नमः ।

ॐ श्रीमते नारायणाय नमः । ॐ श्रीमतेरामानुजाय नमः

## श्रीलक्ष्म्यष्टोत्तरशतनामावलिः

१. ॐ प्रकृत्यै नमः ।
२.ॐ विकृत्यै नमः

३.ॐ विद्यायै नमः ।
४.ॐ सर्वभूतहितप्रदायै नमः

५.ॐ श्रद्धायै नमः ।
६.ॐ विभूत्यै नमः

७.ॐ सुरभ्यै नमः ।
८.ॐ परमात्मिकायै नमः

९.ॐ वाचे नमः ।
१०.ॐ पद्मालयायै नमः

११.ॐ पद्मायै नमः ।
१२.ॐ शुचये नमः

१३.ॐस्वाहायै नमः ।
१४.ॐ स्वधायै नमः
१५.ॐ सुधायै नमः ।
१६.ॐ धन्यायै नमः
१७.ॐ हिरण्मय्यै नमः ।
१८.ॐ लक्ष्म्यै नमः
१९.ॐ नित्यपुष्टायै नमः
२०.ॐ विभावर्यै नमः
२१.ॐ अदित्यै नमः ।
२२.ॐ दित्यै नमः
२३.ॐ दीप्तायै नमः ।
२४.ॐ वसुधायै नमः
२५.ॐ वसुधारण्यै नमः
२६.कमलायै नमः
२७.ॐ कान्तायै नमः ।
२८.ॐ क्षमायै नमः
२९.ॐ क्षीरोदसंभवायै नमः ।
३०.ॐ अनुग्रहप्रदायै नमः
३१.ॐ बुद्ध्यै नमः
३२.ॐ अनघायै नमः
३३.ॐ हरिवल्लभायै नमः ।
३४.ॐ अशोकायै नमः
३५.ॐ अमृतायै नमः ।
३६.ॐ दीप्तायै नमः
३७.ॐ लोकशोकविनाशिन्यै नमः
३८.ॐ धर्मनिलयायैनमः
३९.ॐ करुणायै नमः
४०.ॐ लोकमात्रे नमः
४१.ॐ पद्मप्रियायै नमः
४२.ॐ पद्महस्तायै नमः
४३.ॐ पद्माक्ष्यै नमः
४४.ॐ पद्मसुन्दर्यै नमः
४५.ॐ पद्मोद्भवायै नमः
४६.ॐ पद्ममुख्यै नमः
४७.ॐ पद्मनाभप्रियायै नमः
४८.ॐ रमायै नमः
४९.ॐ पद्ममालाधरायै नमः
५०.ॐ देव्यै नमः

५१.ॐ पद्मिन्यै नमः
५२.ॐ पद्मगन्ध्यै नमः
५३.ॐ पुण्यगन्धायै नमः
५४.ॐ सुप्रसन्नायै नमः
५५.ॐ प्रसादाभिमुख्यै नमः
५६.ॐ प्रभायै नमः
५७.ॐचन्द्रवदनायै नमः
५८.ॐ चन्द्रायै नमः
५९.ॐ चन्द्रसहोदर्यै नमः
६०.ॐ चतुर्भुजायै नमः
६१.ॐ चन्द्ररूपायै नमः
६२.ॐ इन्दिरायै नमः
६३.ॐ इन्दुशीतलायै नमः
६४.ॐ आह्लादजनन्यै नमः
६५.ॐ पुष्ट्यै नमः
६६.ॐ शिवायै नमः
६७.ॐ शिवकर्यै नमः
६८.ॐ सत्यै नमः
६९.ॐ विमलायै नमः
७०.ॐ विश्वजनन्यै नमः
७१.ॐ तुष्ट्यै नमः
७२.ॐ दारिद्र्यनाशिन्यै नमः
७३.ॐ प्रीतिपुष्करिण्यै नमः
७४.ॐ शान्तायै नमः
७५.ॐ शुक्लमाल्याम्बरायै नमः
७६.ॐ श्रियै नमः
७७.ॐ भास्कर्यै नमः
७८.ॐ विल्वनिलयायै नमः
७९.ॐ वरारोहायै नमः
८०.ॐ यशस्विन्यै नमः
८१.ॐ वसुन्धरायै नमः
८२.ॐ उदाराङ्गायै नमः
८३.ॐ हरिण्यै नमः
८४.ॐ हेममालिन्यै नमः
८५.ॐ धनधान्यकर्यै नमः
८६.ॐ सिद्ध्यै नमः
८७.ॐ स्त्रैणसौम्यायै नमः
८८.ॐ शुभप्रदायै नमः
८९.ॐ नृपवेश्मगतानन्दायै नमः
९०.ॐ वरलक्ष्म्यै नमः
९१.ॐ वसुप्रदायै नमः
९२.ॐ शुभायै नमः
९३.ॐ हिरण्यप्राकारायै नमः
९४.ॐसमुद्रतनयायै नमः
९५ॐ जयायै नमः
९६.ॐ मङ्गलादेव्यै नमः

९७.ॐ विष्णुवक्षःस्थलस्थितायै नमः ९८.ॐविष्णुपत्न्यै नमः
९९.ॐ प्रसन्नाक्ष्यै नमः १००.ॐ नारायणसमाश्रितायै नमः
१०१.ॐ दारिद्र्यध्वंसिन्यै नमः १०२.ॐ देव्यै नमः
१०३.सर्वोपद्रववारिण्यै नमः १०४.ॐ नवदुर्गायै नमः
१०५.ॐ महाकाल्यै नमः १०६.ॐ ब्रह्मविष्णुशिवात्मिकायै नमः
१०७.ॐत्रिकालज्ञानसम्पन्नायै नमः १०८.ॐ भुवनेश्वर्यै नमः
ॐ श्रीरङ्गनायकीमहालक्ष्म्यै नमः ॐ श्रीदेव्यै नमः
ॐ भूदेव्यै नमः ॐ नीलादेव्यै नमः
ॐ गोदादेव्यै नमः

ॐ आधारशक्त्यादि समस्तवैकुण्ठपार्षदेभ्यो नमः
ॐ समस्तपरिवारविशिष्टाय श्रीमते विष्वक्सेनाय नमः
ॐ श्रीशेषाय नमः

ॐ गरुडाय नमः
ॐ श्रीसुदर्शनाय हेतिराजाय नमः

ॐ पाञ्चजन्याय शङ्खाधिपतये नमः

ॐ कौमोदक्यै गदाधिपतये नमः

ॐ नन्दकाय खड्गाधिपतये नमः

ॐ शार्ङ्गाय चापाधिपतये नमः

ॐ सर्वेभ्यो दिव्यायुधेभ्यो नमः

ॐ सर्वेभ्यो भगवत्परिकरेभ्यो नमः

ॐ सर्वाभ्यो भगवत्परिचारिकाभ्यो नमः

ॐ अस्मद्गुरुभ्यो नमः
ॐ अस्मत्सर्वगुरुभ्यो नमः
ॐ श्रीपरांकुशदासाय नमः
ॐ श्रीराममिश्राय नमः
ॐ श्रीमन्नाथमुनये नमः
ॐ श्रीमते विष्वक्सेनाय नमः
ॐ श्रीधराय नमः

ॐ अस्मत्परमगुरुभ्यो नमः
ॐ श्रीमते रामानुजाय नमः
ॐ श्रीमद्यामुनमुनये नमः
ॐ श्रीपुण्डरीकाक्षाय नमः
ॐ श्रीमते शठकोपाय नमः
ॐ श्रियै नमः

ॐ समस्तपरिवारविशिष्टाय श्रीमते नारायणाय नमः

यसपछि **कपूरआरती** गरी **अग्निसंस्कार** गर्ने–

# अथ अग्निकुण्डकृत्यम्

अब इन्धन (समिधा)शोधन (सफा)गर्ने ।

ॐ कस्त्वासत्योमदानाम्म गूँ हिष्ठो मत्सदन्धसः । दृढाचिदारुजे व्वसु ॥ शु.य.२७ । ४०

कुण्ड अथवा वेदीमा इन्धन(समिधा)स्थापनागर्ने–

(पञ्चत्रीणि तथा त्रीणि पुनःपञ्च विधानतः)

(५+५+५+३+३+३+५ =२९)

ॐ त्वामिद्धिहवामहेसातौव्वाजस्यकारवः ।
त्वांव्वृत्रेष्ष्विन्द्रसत्पतिन्नरस्त्वाङ्काष्ठा स्वर्व्वतः ॥ शु.य.२७ । ३७

यथासंभव धूवाँलेरहितभएको **अग्नि** तामाआदि पात्रहरुमा लिएर आउनु–

ॐ येनऽऋषयस्तपसासत्रमायन्निन्धानाऽअग्निं गुँ स्वराभरन्तः ।
तस्मिन्नहन्निदधे नाकेऽअग्निं ष्यमाहुर्म्मनवस्तीर्ण बर्हिषम् ॥

शु.य.१५ । ४९

त्वं मुखं सर्वदेवानां सप्तार्च्चिरमितद्युते ॥
आगच्छ भगवन्नग्ने (वह्ने) यज्ञेस्मिन्सन्निधो भव ।

अब अग्निशोधनगर्ने (जलाउने)–

ॐ अग्नावग्निश्चरतिप्प्रविष्टऽऋषीणाम्पुत्रोऽअभिशस्तिपावा ।
सनःस्योनःसुयजायजेह देवेब्भ्योहव्व्य गूँ सदमप्प्रयुच्छन्त्स्वाहा ॥

शु.य.५ । ४

अब अग्निकोपात्र हातमा लिने–

ॐ मयि गृह्णाम्यग्ग्रेऽअग्नि गूँ रायस्पोषाय सुप्रजास्त्वाय
सुवीर्य्याय । मामुदेवताःसचन्ताम् ॥ शु.य.१३ । १

अब अग्निलाई पहेंलाअक्षता अर्पणगरी वैष्णव वनाएकोस्मरणगर्ने–

ॐ एषोहदेवःप्रदिशोनुसर्व्वाःपूर्व्वोहजातः सऽउगर्ब्भेऽअन्तः ।
सऽएव जातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठति सर्व्वतोमुखः ॥

शु.य.३२ । ४

यस मन्त्रलेअग्निका मध्यमा ऋतुस्नानगरेकी लक्ष्मीकासाथमा भगवानको संयोग भइ गर्भवतीभएकी लक्ष्मीको ध्यानगरी लक्ष्मीवाट अग्निकोउत्पत्तिभएको भावना गरी अग्निलाइ वैष्णवबनाइएको स्मरणगर्ने –

यसपछि एउटापात्रमाराखेको अग्निलाइ अर्कोपात्रले छोपेर अग्निको सोह्रसंस्कारगर्ने–

## अथ अग्निसंस्काराः

१. ॐ हं अग्नयेशुचिषदे नमःस्वाहा । गर्भाधानसंस्कारं सम्पादयामि ।

यो मन्त्र उच्चारण गरी पहेंला अक्षताले पूजागर्दै तलभएका मन्त्रहरु पाठ गर्ने, यसरी सवैठाउँमा पूजागर्ने –

ॐ गर्भोऽअस्योषधीनाङ्गर्ब्भोव्वनस्पतीनाम् । गर्ब्भो विश्वस्य भूतस्याग्नेगर्भोऽअपामसि । शु.य.१२ । ३७

२. ॐ हं अग्नये शुचिषदे नमःस्वाहा । पुंसवन संस्कारं सम्पादयामि ।

ॐ व्विवस्वन्नादित्त्यैषतेसोमपीथस्तस्मिन्न्मत्स्व । श्रदस्मै नरोव्वचसेदधातनयदाशीर्द्दादम्पतीव्वामश्नुतः । पुमान्पुत्रो जायतेव्विन्दतेव्वस्वधाव्विस्वाहारपऽएधते गृहे ॥ शु.य.८ । ५

३. ॐ हं अग्नये शुचिषदे नमः स्वाहा सीमन्तोनयन संस्कारं सम्पादयामि ।

ॐ अजीजनोहि पवमानसूर्य्यंव्विधारेशक्मनापयः । गोजीरयार गूँ हमाणःपुरन्ध्या ॥ शु.य.२२ । १८

४. ॐ हं अग्नये शुचिषदे नमः स्वाहा जातकर्म संस्कारं सम्पादयामि ।

ॐ एजतुदशमास्योगर्ब्भो जरायुणा सह । यथायंव्वायुरेजतियथा समुद्रऽएजति । एवायन्दशमास्योऽअस्रज्जरायुणासह । शु.य.८ । २८

अब कुण्डमा अग्निराखेर वाल्ने –

ॐ अग्निम्मूर्द्धादिवःककुत्पत्तिःपृथिव्याऽअयम् । अपा गुँ रेता गुँ सिजिन्वति ॥ शु.य.१३ । १४

ॐ स्थिरोभवव्वीड्वङ्गऽआशुर्भवव्वाज्ज्यर्वन् । पृथुर्ब्भवसुखदस्त्वमग्नेःपुरीषवाहणः ॥ शु.य.११ । ४४

५. ॐ हं अग्नये शुचिषदे नमःस्वाहा नामकरण संस्कारं सम्पादयामि ।

ॐ यदापिपेषमातरम्पुत्रःप्रमुदितोधयन् । एतत्तदग्नेअनृणो भवाम्यहतौपितरौमया । सम्पृचस्थसम्माभद्रेणपृङ्क्तव्विपृचस्थ व्विमापाप्मना पृङ्क्त ॥ शु.य.१९ । ११

६.ॐ हं अग्नये शुचिषदे नमःस्वाहा निष्क्रमण संस्कारं सम्पादयामि ।

ॐ पूषापञ्चाक्षरेण पञ्चदिशऽउदजयत्ताऽउज्जेष गूँ सविताषडक्षरेणषड्तूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेण सप्तग्ग्राम्म्यान्पशूनुदजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम्मित्रो नवाक्षरेण ॥ शु.य.९ । ३२

७. ॐ हं अग्नये शुचिषदे नमः स्वाहा अन्नप्राशनसंस्कारं सम्पादयामि ।

ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः । प्रप्प्रदातारन्तारिष ऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे । शु.य.११ । ८३

८. ॐ हं अग्नये शुचिषदे नमःस्वाहा चूडाकरण संस्कारं सम्पादयामि ।

ॐ अग्नऽ आयाहि वीतये गृणानो हव्य दातये । निहोता सत्सि वर्हिषि ॥

९. ॐ हं अग्नये शुचिषदे नमःस्वाहा कर्णवेधसंस्कारं सम्पादयामि ।

भद्रङ्कर्णेभिः श्रृणुयामदेवाभद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा गूँ सस्तनूभिर्व्यशेमहिदेवहितं यदायुः ॥

शु.य.२५ । २१

१०. ॐ हं अग्नये शुचिषदे नमः स्वाहा उपनयन संस्कारं सम्पादयामि ।

ॐ अग्निरेकाक्षरेणप्प्राणमुदजयत्तमुज्जेषमश्विनौद्व्यक्षरेण द्विपदोमनुष्यानुदजयतान्तानुज्जेषंविष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेष गूँ सोमश्चतुरक्षरेण चतुष्पदःपशूनुद जयत्तानुज्जेषम्पूषापञ्चाक्षरेण ॥ शु.य.९ । ३१

११. ॐ हं अग्नये शुचिषदे नमः स्वाहा सावित्री श्रावणसंस्कारं सम्पादयामि ।

ॐ वैश्वानराय विद्महे सप्तजिह्वाय धीमहि तन्नोऽअग्निःप्रचोदयात्

१२. ॐ हं अग्नयेशुचिषदे नमः स्वाहा वेदारम्भ संस्कारं सम्पादयामि ।

ॐ वेदोसियेनत्वन्देवव्वेददेवेब्भ्योव्वेदोभवस्तेनमह्यंव्वेदोभूयाः । देवागातुविदोगातुंव्वित्वागातुमित । मनसस्पतऽइमन्देवयज्ञ गुँ स्वाहाव्वातेधाः ॥ शु.य.२ । २१

१३. ॐ हं अग्नये शुचिषदे नमः स्वाहा समावर्तन संस्कारं सम्पादयामि ।

ॐ व्रतङ्कृणुतव्व्रतङ्कृणुताग्निर्ब्ब्रह्माग्निर्य्यज्ञोव्वनस्पतिर्य्यज्ञियः । दैवीन्धियम्मनामहेसुमृडीकामभिष्टयेव्वर्च्चोधांयज्ञवाहस गूँ सुतीर्त्थानोऽअसद्वशे । येदेवामनोजातामनोयुजो दक्षक्रतवस्तेनोवन्तु तेनःपान्तुतेब्भ्यःस्वाहा । शु.य. ४ । ११

१४. ॐ हं अग्नये शुचिषदे नमःस्वाहा गोदान संस्कारं सम्पादयामि।

ॐ गावऽउपावतावतम्महीयज्ञस्यरप्सुदा। उभाकर्णाहिरण्ययया।

शु.य.३३।१९

१५. ॐ हं अग्नयेशुचिषदे नमःस्वाहा स्नातकव्रत संस्कारं संपादयामि।

ॐ अग्नेव्व्रतपतेव्व्रतमचारिषन्तदशकन्तन्मेराधीदमहं य्यऽ एवास्मिसोस्मि॥ शु.य. २।२८

१७.ॐ हं अग्नये शुचिषदे नमः स्वाहा विवाहसंस्कार सम्पादयामि।

ॐ भगऽएवभगवाँ२ऽअस्तुदेवास्तेनव्वयम्भगवन्तःस्याम। तन्त्वा भगसर्व्वऽइज्जोहवीतिसनोभगपुरऽएताभवेह॥ शु.य.३४।३८

१८.ॐ हं अग्नये शुचिषदे नमः स्वाहा अवशिष्टसंस्कारं सम्पादयामि।

ॐ अग्निदूतं पुरोदधे हव्व्यवाहमुपब्रुवे। देवाँ२ आसादयादिह॥

शु.य.२२।१७

१९.ॐ हं अग्नये शुचिषदे नमःस्वाहा वह्नीं षोडशसंस्कारपूर्तिरस्तु।

अब चन्दनपुष्प अक्षता लिएर हातजोडेर प्रार्थना गर्ने–

ॐ ऋतावानंव्वैश्वानरमृतस्यज्ज्योतिषस्पतिम्। अजस्रङ्घर्ममीमहे। उपयामगृहीतोसिव्वैश्श्वानरायत्वैषतेयोनिर्व्वैश्श्वानरायत्वा।

शु.य.२६।६

ॐ व्वैश्श्वानरस्यसुमतौस्यामराजाहि कम्भुवनानामभिश्श्रीः ।
इतो जातो विश्श्वमिदंव्विचष्टेव्वैश्वानरोयततेसूर्य्येण ।
उपयामगृहीतोसिव्वैश्वानरायत्वैषतेयोनिर्व्वैश्वानरायत्वा ॥

शु.य.२६ । ७

ॐ व्वैश्वानरोनऽऊतयऽआप्प्रयातुपरावतः । अग्निरुक्थेनव्वाहसा ।
उपयामगृहीतोसिव्वैश्वानरायत्वैषतेयोनिर्व्वैश्वानरायत्वा ॥

शु.य.२६ । ८

ॐ आवाहये त्वां पुरुषं महान्तं , सुरासुरैर्वन्दितपादपद्मम् ।
ब्रह्मादयो यस्य मुखे वसन्ति , प्रविश्य कुण्डे सुरलोकनाथ ॥

## अथ अष्टवसुपूजनम्

८ओटा वोहोता (दुना)आदिमा चामलराखेर कुशको कूर्च राखी पूर्वादिक्रमले अष्टवसुको आवाहनगरीपूजनगर्ने—

ॐ अग्नये नमः अग्निम् आवाहयामि स्थापयामि पूजयामि ।
ॐ जातवेदसे नमः जातवेसम् आवाहयामि स्थापयामि पूजयामि ।
ॐ सहोजसे नमः सहोजसम् आवाहयामि स्थापयामि पूजयामि ।
ॐ अजिराप्रभवे नमःअजिराप्रभुम् आवाहयामि स्थापयामि पूजयामि ।
ॐ वैश्वानराय नमःवैश्वानरम् आवाहयामि स्थापयामि पूजयामि ।
ॐ नर्यापसे नमः नर्यापसम् आवाहयामि स्थापयामि पूजयामि ।
ॐ पंक्तिराधसे नमः पंक्तिराधसम् आवाहयामि स्थापयामि पूजयामि ।
ॐ विसर्पिणे नमःविसर्पिणम् आवाहयामि स्थापयामि पूजयामि ।

ॐ सुगावोदेवाःसदनाऽअकर्म्मयऽआजग्मेद गूँ सवनञ्जुषाणाः ।
भरमाणाव्वहमानाहवी गुँ ष्यस्म्मेधत्तव्वसवोव्वसूनि स्वाहा ॥

शु.य.८ । १८

ॐ यज्ञपुरुषाय नमः यज्ञपुरुषमावाहयामि स्थापयामि पूजयामि ॥

यसरी कुण्डकोचारैतिर पूजा गर्ने–

ॐ आत्मनेनमः आफ्ना शिरमापनि पुष्प अक्षता राख्ने–

ॐ सर्वेभ्यः श्रीवैष्णवेभ्यो नमः सवै श्रीवैष्णवकाशिरमापनि पीताक्षताले पूजागर्ने–

## अथ ब्रह्मपूजनम्

अग्निको दक्षिणपट्टि मण्डलमाथि **सातकुश**वाटनिर्मितभएको कूर्चमा सशक्तिक ब्रह्माजीलाइ आवाहनगरी पूजन गर्ने–

ॐ आब्ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रेराजन्यःशूरऽ इषव्व्योतिव्याधीमहारथोजायतान्दोग्ग्ध्रीधेनुर्व्वोढानड्वानाशुःसप्तिः पुरन्धिर्य्योषाजिष्णूरथेष्ठाःसभेयोयुवास्य यजमानस्य व्वीरो जायता न्निकामेनिकामे नःपर्ज्जन्योव्वर्षतु फलवत्योनऽओषधयः पच्च्यन्तां य्योगक्षेमो नः कल्प्पताम् । शु.य.२२ । २२

## अथ ब्रह्मावाहनम्

ॐ ब्रह्मजज्ञानं प्रथमम्पुरस्ताद्विसीमतःसुरुचोव्वेनऽआवः ।
सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ।

शु.य.१३ । ३

आवाहयाम्यहं देवं ब्रह्माणं परमेष्ठिनम् ।
जगतोऽस्य समुपत्तिस्थितिसंहारकारणम् ॥
आगच्छ भगवन् ब्रह्मन् यजमानसमृद्धये ।
गन्धपुष्पादिभिः पूजां गृहाण जगदीश्वर ॥

ॐ बह्मणे नमः ॥ सवै अर्घ्यादिउपचारले पुजनगरी साष्टाङ्ग प्रणाम गर्ने

## अथासनविधानम् । (कुशकण्डिका)

होताको आसन

ॐ यस्य कुर्म्मोगृहेहविस्तमग्नेव्वर्द्धयात्वम् ।

तस्म्मै देवाऽअधिब्ब्रवन्नयञ्च ब्ब्रह्मणस्पतिः ॥ शु.य. १७ । ५२

अग्निकोदक्षिणपट्टी ब्रह्माकोसमीपमा यजमानको आसनराख्ने—

ॐ अग्ने प्रेहिप्प्रथमोदेवयताञ्चक्षुर्देवानामुतमर्त्यानाम् ।
इयक्षमाणा भृगुभिःसजोषाःस्वर्य्यन्तुयजमानाः स्वस्ति ॥

शु.य. १७ । ६९

तलको मन्त्रपढ्दै अग्निको उत्तरतिर प्रणीतासनकानिमित्त पूर्वतर्फ टुप्पावनाइ तीनवटाकुशको आसन राख्ने र प्रणीता र अग्निको बीचमा प्रोक्षणीपात्रकालागिपनि तीनकुशकै आसनराखिदिने–

ॐ परीत्यभूतानि परीत्यलोकान्परीत्यसर्व्वाः प्रदिशो दिशश्च ।
उपस्त्थायप्प्रथमजामृस्तयात्मनात्मानमभिसंव्विवेश ॥ शु.य.३२ ।११

## अथ प्रोक्षणीप्रणीते

त्यसपछि बाह्रअंगुल लम्बाइ चारअंगुल फराकिलो(चौडाइ) चारअंगुल गहिरोभएको प्रणीतापात्रलाई वायाँहातमा लिएर तलको मन्त्र उच्चारण गर्ने –

ॐ इन्द्रऽआसान्नेताबृहस्पतिर्द्दक्षिणायज्ञःपुरऽएतुसोमः ।
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् । शु.य.१७ ।४०

अब दाहिनेहातले प्रणीतापात्रमा जलभर्दै तलकोमन्त्र पढ्ने –

ॐ उदुत्तमंव्वरुणपाशमस्मदवाधमंब्विमध्यम गुँ श्रथाय ।
अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितये स्याम ॥ शु.य.१२ ।१२

अब दाहिनेहातको अनामिका(साँहिलीऔंला)ले प्रणीतापात्रको जललाईस्पर्शगर्ने –

ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेय्यजमानो हविर्ब्भिः ।
अहेडमानोव्वरुणेहबोद्ध्युरुष गुँ समानऽआयुः प्रमोषीः ॥ शु.य.२१ । २

यसपछि ब्रह्माकोमुखलाईअवलोकनगरी प्रणीतापात्र उत्तरतिरको आसनमा स्थापनागर्नु –

ॐ त्र्यम्बकंय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥

त्र्यम्बकंय्यजामहेसुगन्धिम्पतिवेदनम् ।
उर्व्वारुकमिव बन्धनादितोमुक्षीयमामुतः ॥ शु.य.३ । ६०

दुइवटापवित्र बनाउने—

ॐ पवित्रेस्थोव्वैष्णव्व्यौसवितुर्व्वःप्रसवऽउत्पुनाम्यच्छिद्रेण पवित्त्रेण सूर्य्यस्य रश्मिभिः । देवीरापोऽअग्रेगुवोऽअग्रेपुवोग्रऽइम मद्ययज्ञन्नयताग्रेयज्ञपति गूँ सुधातुंय्यज्ञपतिन्देवयुवम् ॥ शु.य.१ । १२

## जलसंस्कारः

अब सबैपात्रहरु उत्तानोबनाएर बाह्रअंगुल लम्बाइभएकोहत्केलाबराबर गहिरो कमलपुष्पकोआकृतीभएको उत्तानो पारिएको प्रोक्षणीपात्रमा जल राख्ने—

ॐ इमं मे वरुणश्श्रुधीहवमद्याचमृडय । त्वामवस्युराचके ॥

शु.य.२१ । १

१ वित्ताबराबरको अगाडीटुप्पाभएको २वटाकूशका पवित्र बनाएर जललेप्रोक्षणगरी दुइवटा पवित्र प्रोक्षणीपात्रमा राख्ने—

ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्ब्बाहुब्भ्यांपूष्णो हस्ताभ्याम् । अग्नयेजुष्टगृह्णाम्म्यग्नीषोमाब्भ्याञ्जुष्टंगृह्णामि । शु.य.१ । १०

त्यसपछि त्यहाँ पीताक्षताराख्ने र भित्र पवित्रराखिएको प्रोक्षणीपात्रमा जलराखेर अग्निकोदक्षिणतिरवाट ल्याउने  मुखखोलीआफ्ना अगाडीराखी दाहिनेहातकोअंगुष्ठकनिष्ठिका औंलाले दुइटैपवित्रलिएर पूर्वपट्टी तीनपटक प्रोक्षणगर्ने यज्ञपात्रहरुलाई पनि तीनपटकप्रोक्षणगरी समिधा खोली तीनपटक अभिषेक गर्ने र परिस्तरण राख्ने —

# अथ परिस्तरणम्

ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाःपाशावितताममहान्तः ।
तेभिर्नोऽअद्यसवितो तद्विष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्काः स्वाहा ।

परिस्तरणप्रकारः

यसपछि तलको मन्त्र पढ्दै अग्निकोवरिपरि कुश राख्ने, जस्तै– आग्नेयवाट ईशानतिर उत्तरतिर कुशकोटुप्पो बनाई राख्ने, ब्रह्मा देखी अग्निपर्यन्त पूर्वाग्र बनाएर राख्ने अग्निदेखी प्रणीता सम्म पूर्वटुप्पोबनाइ राख्ने , यसरी परिस्तरणराखेपछि यथा यथास्थानमा हवनसामाग्री र अन्य पात्रहरु राख्ने

ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेय्यजमानो हविर्ब्भिः ।
अहेडमानोव्वरुणेहबोद्ध्युरुष गूँ समानऽआयुः प्रमोषीः ॥ शु.य.२१ । २

पवित्रकोलागी भित्रको गुभो र टुप्पालेसहितभएको तीनवटा कुश हातमा लिने –

ॐ शादन्दद्भिरवकान्दन्तमूलैर्म्मृदम्बस्वैंस्तेगान्द गुं ष्ट्राब्भ्या गुँ सरस्वत्याऽअग्र जिह्वं जिह्वायाऽउत्सादमवक्क्रन्देनतालुव्वाज गूँ हनुब्भ्यामपऽआस्येनव्वृषणमाण्डाब्भ्यामादित्याँश्मश्रुभिःपन्थानं भ्रूब्भ्यान्द्यावापृथिवीव्वर्तोभ्यांविद्युतङ्कनीनकाब्भ्या गुँ शुक्लाय स्वाहा कृष्णायस्वाहा पार्य्याणि पक्ष्माण्यवार्य्याऽइक्षवोवार्य्याणि पक्ष्माणि पार्य्याऽइक्षवः ॥ शु.य.२५ । १

उपयमनकालागी १३वटाकुश हातमालिने–

ॐ उपयामगृहीतोस्यन्तर्य्यच्छमघवन्पाहि सोमम् ।
उरुष्यरायऽएषोयजस्व ॥ शु.य.७ । ४

यज्ञमाचाहिने १५समिधा अलग्गै राख्ने –

ॐ समिधाग्निन्दुवस्यतघृतैर्ब्बोधयतातिथिम् ।
आस्मिन्न्हव्याजुहोतन ॥ शु.य.३ । १

आज्य पात्रमा आज्य , चरुपात्रमा चरु पनि राख्नु–

## आज्य(घृत)संस्कारः

अब तामा वाहेककोअन्यधातुमा अथवा माटाकापात्रमा बाह्र अंगुल चौडा अथवा एक वित्ता वरावरभएको आज्यथालीमा दुइवटापवित्रराख्ने, अग्निको पश्चिमपट्टी पवित्रराखिएको आज्यथालीमा आज्य राखी ईशानदिशामा अग्नि(कोइला) माथि राखेरकुशजलाएरघीउमाथिघुमाइ कुशको अग्रभागटुप्पाभएको दुइकुश नङ् नलगाईछिनाएर पखाली आज्यपात्रमा राख्ने र फेरीपनि कुशजलाएरघीउमाथि तिनपटकघुमाइकुशलाइ ईशानतिर फ्याकिदिने,

ॐ घृतवतीभुवनानामभिश्श्रियोर्व्वीपृथ्वीमधुदुघेसुपेशसा ।
द्यावा पृथिवीव्वरुणस्यधर्म्मणाविष्कवितेअजरेभूरिरेतसा ।

शु.य.३४ । ४५

आज्यलाई अग्निवाटनिकाली कोइलालाइ अग्निमै राखेर पवित्रसहितभएको हातलेअग्निको प्रदक्षिणा गराइ आफ्नाअगाडी राखेर दुवैहातकोअंगुष्ठ कनिष्ठिकाले दुवैपवित्रलिएर आज्यलाई तीनपटक माथिछिटा दिने,घीउमा केहीपरेकोभएहटाएर पवित्रग्रन्थि खोलेर जलले प्रोक्षणगरीपूर्वटुप्पोगराइ अग्निमा राखिदिने–
आज्यलाइअग्नि प्रदक्षिणा गराइ आफ्नाअगाडी राख्ने–

ॐ तेजोसि शुक्रमस्य मृतमसि धामनामासि ।
प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥

तलको मन्त्रले आज्य निरीक्षण गर्ने –

ॐ आपवस्व हिरण्यवदश्श्ववत्सोमव्वीरवत् ।
व्वाजङ्गोमन्तमाभर स्वाहा ॥ शु.य.८ । ६३

दुवैपवित्रलिएर आज्यलाई तीनपटक माथिछिटा दिने—

ॐ प्रत्युष्ट गूँ रक्षःप्रत्युष्टाऽअरातयोनिष्टप्त गूँ रक्षो निष्टप्ता ऽअरातयः । उर्व्वन्तरिक्षमन्वेमि शु.य.१ । ७

आज्यमा केही परेकोभए निरीक्षणगरी निकालिदिने —

ॐ आत्वाहार्षमन्तरभूर्द्ध्रुवस्तिष्ठाव्विचाचलिः ।
व्विशस्त्वा सर्व्वाव्वाञ्छन्तुमात्वद्द्राष्ट्रमधिभ्रशत् ॥ शु.य.१२ । ११

आज्यमा पवित्र राख्ने—

ॐ व्विष्णोरराटमसि व्विष्णोःश्नप्त्रेस्त्थो व्विष्णोःस्यूरसि व्विष्ष्णोर्द्ध्रुवोसि । व्वैष्णवमसि विष्णवेत्त्वा ॥ शु.य.५ । २१

## अथ चरुसंस्कारः

दध्योदनं तिलान्नञ्च सर्पिः क्षीरन्तथैव च ।
केवलान्नं पायसान्नं मुद्गान्नं च गुणौदनम् ॥
चरुरष्टविधः प्रोक्तोधर्मविद्भिः पुरातनैः ।

यसरी आठप्रकारका चरुहरुमा यथासम्भवचरु चरुपात्रमाराखेर सम्प्रोक्षणगरी कुश जलाएरचरुकोमाथीघुमाइ केहीपरेकोरहेछभने निकालेरअग्निको प्रदक्षिणागराइ अग्निकोपश्चिमपट्टि कुशमाथि कुशैले छोपेर राख्ने—

ॐ पशुभिःपशूनाप्नोतिपुरोडाशैर्हवी गुँ ष्ष्या ।
छन्दोभिःसामिधे नीर्य्याज्ज्याभिर्वषट्कारान् ॥ शु.य.१९ । २०

ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ।
प्रप्प्रदातारन्तारिष ऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे । शु.य.११ । ८३

यसरी चरुलाइपनि दक्षिणपट्टिवाटपरिक्रमागराइआफ्ना अगाडी राखेर मार्जनकालागी तीनभन्दाअधिक कुशराख्ने—

ॐ घृताच्यसिजुहूर्न्नाम्नासेदम्प्रियेणधाम्नाप्प्रिय गूँ सदऽआसीद घृताच्च्यस्युपभृन्नाम्नासेदम्प्रियेणधाम्नाप्रिय गूँ सदऽआसीद घृताच्यसिद्ध्रुवानाम्नासेदम्प्रियेणधाम्नाप्प्रिय गूँ सदऽआसीद प्प्रियेणधाम्नाप्प्रिय गूँ सदऽआसीद । ध्रुवाऽअसदन्नृतस्ययोनौ ताव्विष्ष्णोपाहिपाहियज्ञम्पाहियज्ञपतिम्पाहि मां य्यज्ञन्न्यम् ॥

शु.य.२ । ६

## अथ स्रुवसंस्कारः

सुरोलाई अग्निमा तताएर सम्मार्जनकुशकाअग्रभागले सुरोको अग्रभागमा, कुशकाफेदले सुरोकोफेदमा, कुशकामध्यले सुरोकोमध्यमा र सवैतिर पुछिदिने पुनःसुरो तताएर प्रोक्षणगरी अग्निको उत्तरतिर राख्ने

यो मन्त्रले सुरो हातमालिने—

ॐ स्रुचश्श्चमे चमसाश्श्चमे व्वायव्व्यानिचमे द्रोणकलशश्श्चमे ग्ग्रावाणश्श्चमे धिषवणेच मे पूतभृच्चमऽआधवनीयश्श्चमेव्वेदिश्श्च मे बर्हिश्चमेऽवभृथश्श्चमे स्वगाकारश्श्चमे यज्ञेन कल्पन्ताम् ।

शु.य.१८ । २१

सम्मार्जनकुशलिएर प्रणीतोदकले सुरो प्रोक्षणगर्ने , यो क्रमअनुसार (अग्रलेअग्रभाग मध्यलेमध्यभाग मूलले फेदमा)

ॐ प्रत्युष्ट गूँ रक्षःप्प्रत्युष्टाऽअरातयो निष्टप्त गूँ रक्षो निष्टप्ताऽअरातय । उर्व्वन्तरिक्षमन्न्वेमि । शु.य.१ ।७

दर्भले श्रुवसम्मार्जन गर्ने—

ॐ अनिशितोसि सपत्क्नक्षिद्वाजिनीन्त्वाव्वाजेद्ध्यायै सम्म्मार्ज्मि ।

शु.य.१ । २९

अग्निमा सुरो तताउने—

ॐ पुनन्तुमादेवजनाः पुनन्तुमनसा धियः। पुनन्तु व्विश्वा भूतानि जातवेदःपुनीहि मा॥ शु.य.१९। ३९

प्रणीताकोजलले सुरोलाई अभिषेकगर्ने—

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये। शंय्योरभिस्रवन्तु नः ।

शु.य.३६। १२।

पुनः सुरो तताउने—

ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेय्यजमानो हविर्ब्भिः। अहेडमानोव्वरुणेहबोद्ध्युरुष गूँ समानऽआयुः प्रमोषीः॥ शु.य.२१। २

सुरोलाई अग्निको उत्तरतिर कुशमाथिराख्ने—

ॐ तमुत्त्वादध्यङ्ङृषिःपुत्रऽईधेऽअथर्वणः। व्वृत्रहणम्पुरन्दरम्॥

शु.य.११। ३३

प्रोक्षणीपात्रमाभएको पवित्रले प्रणीताकोजलमा चोभेर त्यहाँभएकासामाग्रीमा सेचनगर्ने—

ॐ देवस्यत्वा सवितुः प्रसवेश्श्विनोर्ब्बाहुब्भ्यांपूष्णो हस्ताभ्याम्। अग्नयेजुष्टगृह्णाम्म्यग्नीषोमाब्भ्याञ्जुष्टंगृह्णामि। शु.य.१। १०

(अग्नीषोमाब्भ्यान्त्वाजुष्टन्नियुनज्मि। अद्भ्यस्त्वौषधीब्भ्योनुत्वा मातामन्यतामनुपितानुब्भ्रातासगर्ब्भ्योनु सखा सयूत्थ्यः। अग्निषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि॥)

कुश जलाएर चरु आज्य र अग्निमाथि प्रदक्षिणाकोक्रमले घुमाएर अग्निमा राखिदिने –

ॐ धृष्टिरस्यपाग्नेऽ अग्निमामादञ्जहिनिष्क्रव्याद गूँ सेधादेवयजं व्वह । ध्रुवमसिपृथिवीन्दृ गूँ हब्ब्रह्मवनित्वाक्षत्रवनि सजातवन्युपद धामिब्भ्रातृव्व्यस्यव्वधाय ॥ शु.य.१ । १७

## पूर्णपात्रसंस्कारः

दुइ पवित्र पूर्णपात्रमा राखी कान्छी र बुढी औंलाले समातेर पूर्णपात्रलाई पूर्वपट्टी तीनपटक छिटादिइ अग्निकोदक्षिणतिरवाट पूर्णपात्रल्याउने र मुखखोलेर ब्रह्माको समीपमा स्थापनागर्ने–

अब चरुलाई कुशलेछोपेर ब्रह्मालाई समर्पणगर्ने–

ॐ आप्यायस्व समेतुते विश्वतःसोमवृष्ण्यम् ।
भवावाजस्य सङ्गथे ॥ शु.य.१२ । ११२

अब विनियोगपूर्वक अग्निकोप्रार्थनागर्ने–

चत्वारीत्यस्य वामदेवऋषिः त्रिष्टुप् छन्दो यज्ञपुरषवैश्वानर परमात्मा देवता अग्निप्रार्थने विनियोगः ।

ॐ चत्वारिश्शृङ्गात्रयोऽअस्यपादा द्वेशीर्षेसप्तहस्तासोऽअस्य ।
त्रिधाबद्धोव्वृषभोरोरवीतिमहोदेवोमर्त्याँ २ऽ आविवेश ॥
शु.य.१७ । ९१

अग्निं च ज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं सर्वतोसुखम् ॥
पावकं द्विजरूपञ्च त्रिनेत्रञ्च चतुर्भुजम् ।
त्रिशिखं सप्तजिह्वञ्च पञ्चलक्षणसंयुतम् ॥

त्रिभागन्तु मुखं तस्य ह्यधिकं वक्त्रमुच्यते ।
उत्तरास्ये स्थितो विष्णुर्दक्षिणास्ये प्रजापतिः ॥
मध्यवक्त्रे तु चेशान एवं ब्रह्मप्रभाषितम् ।
मूर्ध्नि चैवत्वहं ब्रह्मा मुखे चैव तु शङ्करः ॥
जिह्वायां संस्थितो विष्णुर्दंष्ट्रायां च ग्रहाः स्मृताः ।
नासायां देवताः सर्वाश्चक्षुषीन्दुदिवाकरौ ॥
ऋग्वेदो हृदयस्थाने बाह्वंगुल्योर्यजुस्तथा ।
उदरे कटिगुह्ये च सामवेदः प्रकीर्तितः ॥
अथर्वो जङ्घपादे च ग्रीवायां प्रणवस्तथा ।
पृष्ठे चैव तु गायत्री एवं स्यात्तु षडङ्गकम् ॥

इति वैश्वानरलक्षणम्

त्रिशिखं च चक्रधरं साक्षसूत्रकमण्डलुम् ।
व्याघ्रहस्तं तथा पुष्प गन्धाभरणभूषितम् ॥

अजास्कन्ध समारूढं कृष्णाजिनोत्तरीयकम् ।
ऋग्यजुःसामवेदानामथर्वध्वनिभूषितम् ॥
होमार्थ प्रार्थयेऽहं त्वां चर्वाज्याभ्यां हुताशनम् ।
ॐ अमुकवैश्वानर दिव्यरूप आवाहितो भव ॥

तावत् तिष्ठात्र मे ब्रह्मन् ! यावत्कर्म समाप्यते ।
स्वाहास्वधा सहिताय अग्नयेऽमुकाय नमः ॥
यसरी आवाहनगर्ने–

कर्मविशेषमा अग्निका नामहरु–

यज्ञकर्मणि वह्नेर्वै नामसङ्कथ्यतेधुना ।
**पावको** लौकिकेह्यग्निःप्रथमःपरिकीर्तितः ॥
अग्निस्तु **मारुतो(भरतो)**नाम गर्भाधाने विधीयते ।
तथा पुंसवने चैव सीमन्ते जातकर्मणि ॥
ततः पुसवने ज्ञेयः**पावमाना**ख्य नामतः ।
सीमन्ते **मङ्गलो** नाम **प्रबलो** जातकर्मणि ।।
नामेषु **पार्थिवो** ज्ञेयः प्राशने तु **शुचि**स्मृतः ।
चूडायां **मङ्गलो** नाम ह्यग्निष्टोमे **प्रदायकः** ॥
**आवसथ्ये** भवेदग्निःस्थावरे **पावको** भवेत् ।
शान्तिके **दारुणो** नाम **वायव्ये** वरुणो भवेत् ॥
युगान्ते **चाक्षयो** नाम वत्सरे **प्रलयं** गतः ।
चौले तु **सभ्य** नामो वै व्रतबन्धे **समुद्भवः** ॥
गोदाने **सूर्य**नामाग्निर्विवाहे **योजक**स्मृतः ।
**आवसथ्ये** द्विजोज्ञेयो वैश्वदेवे तु **रुक्मकः** ॥
प्रायश्चित्ते **विधि**श्चैव पाकयज्ञेषु **पावकः(साहसः)** ।
देवानां **हव्यवाह**श्च पितृणां कव्यवाहनः ॥
शान्तिके **वरदः** प्रोक्तः पौष्टिके **बलवर्धनः** ।
पूर्णाहुत्यां **मृडो** नाम **क्रोधा**ग्निश्चाभिचारके ॥
वश्यार्थे **कामदो** ज्ञेयो वनदाहे तु दूषकः(दूतकः) ।
कुक्षौ तु **जाठरो** ज्ञेयः **क्रव्यादो** मृतदाहके ॥
लक्षहोमे **वह्नि**नाम कोटिहोमे **हुताशनः** ।
वृषोत्सर्गे **ध्वरो** नाम शुद्धिकर्मे तु **ब्राह्मणः** ॥

समुद्रे **वाडवो** नाम यमे **सम्वर्तक**स्तथा ।
गार्हस्पत्ये भवेत् **ब्रह्मा** दक्षिणाग्निस्तु **ईश्वरः ॥**
**विष्णु**राहवनीयःस्यात् अग्निहोत्रे **त्रयोऽग्नयः** ।
अनुक्तो वै भवेत् यस्मिन् कर्मणि **हव्यवाहनः** ॥
**विष्णु**नाम्नैव सम्पूज्य कर्तव्यं कर्ममुत्तमम् ॥

## रक्षाकङ्कणपूजनम्

त्रिगुणीकृतगरीएको (सुवर्ण)सूत्रादिवाटनिर्मित रक्षाकङ्कण दूवो,सर्स्युं,चन्दन गोबर दहीलेसहित बोहोता(दुना)मा राखेर त्यो दुनालाई पूर्णकुम्भकोसमीपमा राखी स्पर्शगर्दै नारायणकवच अथवा तलका मन्त्रहरु पाठगर्ने –

ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः ।
याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥
वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः ।
उत्तरे श्रीधरो रक्षेदैशान्यां तु गदाधरः ॥
ऊर्ध्वं गोवर्धनो रक्षेदधस्तात्तु महेश्वरः ।
एवं दशदिशो रक्षेद्वासुदेवो जनार्दनः ॥
यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे वै पद्ममुत्तमम् ।
वामपार्श्वे गदा रक्षेत् दक्षिणे च सुदर्शनः ॥
उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ।
ऋग्वेदमच्युतो रक्षेद्यजुर्वेदमधोक्षजः ॥
कृष्णो रक्षतु सामानमथर्वाणञ्च माधवः ।
उपविष्टांश्च यान्विप्रान् तांश्च रुद्रोऽभि रक्षतु ॥
यजमानं सपत्नीकं पुण्डरीकाक्ष रक्षतु ।
रक्षाहीनं च यत्स्थानं तत्सर्व रक्षताद्धरिः ॥

अब तलकामन्त्रले रक्षासूत्रको पूजागर्ने—

ॐ रक्षोहणंव्वलगहनंवैष्णवीमिदमहन्तंव्वलगमुत्किरामि, यम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंव्वलगमुत्किरामियम्मे समानो यमसमानोनिचखानेदमहन्तंव्वलगमुत्किरामियम्मे सबन्धु र्र्यमसबन्धुर्न्निचखानेदमहन्तंव्वलगमुत्किरामियम्मेसजातो यमसजातोनिचखानोत्कृत्याङ्किरामि ॥ शु.य.५ । २३

ॐ स्वराडसिसपत्नहासत्रराडस्यभिमातिहाजनराडसिरक्षोहा सर्व्वराडस्यमित्रहा ॥ शु.य.५ । २४

ॐ रक्षोहणोवोव्वलगहनःप्प्रोक्ष्यामिव्वैष्णवान्रक्षोहणोवोव्वलगहनो वनयामिव्वैष्णवान्रक्षोहणोवोव्वलगहनोव्वस्तृणामिव्वैष्णवान्रक्षोह णौवांव्वलगहनाऽउपदधामिव्वैष्णवीरक्षोहणौवांव्वलगहनौपर्य्यूहामि व्वैष्णवीव्वैष्णवमसिव्वैष्णवास्त्थ । शु.य. ५ । २५

ॐ सप्तऽऋषयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्प्रमादम् । सप्तापः स्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥

शु.य.३४ । ५५

यसरी पूजनगरेर वायाँहातमा रक्षाकङ्कणराखी दाहिनेहातले ढाकेर प्रतिसरसूक्तले अभिमन्त्रणगर्ने—

ॐ कृणुष्ष्वपाजःप्रसितिन्नपृत्थ्वींय्याहिराजेवामवाँ२ऽइभेन । तृष्ष्वीमनुप्प्रसितिन्द्रूणानोरस्तासिव्विद्ध्यरक्षसस्तपिष्ठैः ॥ शु.य.१३ । ९

ॐ तवबभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ।
तपू गुँ ष्ष्यग्नेजुह्वापतङ्गानसन्दितोव्विसृजविष्ष्वगुल्क्काः ॥
शु.य.१३ । १०

ॐप्रतिस्प्पशोविसृजतूर्ण्णितमोभवापायुर्व्विशोऽअस्याऽअदब्धः ।
योनोदुरेऽअघस गुँ सोयोऽअन्त्यग्नेमाकिष्टेव्व्यथिरादधर्षीत् ॥
शु.य.१३ । ११

ॐउदग्नेतिष्ठप्प्रत्यातनुष्वन्न्यमित्राँ२ओषतात्तिग्ग्महेते ।
योनोऽअराति गुँ समिधानचक्क्रेनीचातन्धक्ष्यतसन्नशुष्कम् ॥
शु.य.१३ । १२

ॐउद्ध्र्वोभवप्प्रतिविद्ध्याद्ध्यस्मदाविष्कृणुष्ष्वदैव्व्यान्यग्ग्ने ।
अवस्थिरातनुहियातुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून् ।
अग्ग्नेष्ट्वा तेजसा सादयामि ॥ शु.य.१३ । १३

ॐ अग्निर्मूर्द्धादिवःककुत्त्पत्तिःपृथिव्याऽअयम् ।
अपा गुँ रेता गुँ सिजिन्वति । इन्द्रस्यत्त्वौजसासादयामि ॥ शु.य.१३ । १४

अब रक्षाकङ्कण बाध्ने–

ॐ नतद्रक्षा गुँ सिनापिशाचास्तरन्तिदेवानामोजःप्प्रथमज गुँ ह्येतत् । योबिभर्त्तिदाक्षायण गुँ हिरण्य गुँ सदेवेषुकृणुतेदीर्ग्घमायुः समनुष्ष्येषुकृणुतेदीर्ग्घमायुः ॥ शु.य.३४ । ५१

ॐ बृहत्साम क्षत्रभृद् बृद्धबृष्ण्यं त्रिष्टुभौजः सुभितमुग्रवीरम् ।
इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वा तेन सगरेण रक्षा ॥

ॐ जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ जितन्तेस्तोत्रम्

## परिस्तरणम्

पूर्व दक्षिण पश्चिम उत्तरदिशामा क्रमैले अगाडीकामन्त्रद्वारा कुशलिएर परिस्तरण राख्ने –

ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् ॥

ॐ इषेत्वोर्ज्जेत्वा व्वायवस्थदेवोवः सवितापप्रार्पयतुश्श्रेष्ठतमाय कर्म्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्रायभागं प्रजावतीरनमीवाऽअयक्ष्मा मावस्तेनऽईशतमाघस गूँ सोद्ध्रुवाऽअस्मिन्गोपतौ स्यातबह्वीर्य्यजमानस्यपशून्पाहि। शु.य.१।१

ॐ अग्नऽ आयाहि वीतये गृणानो हव्य दातये।
निहोता सत्सि वर्हिषि॥

ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये।
शंय्योरभिस्रवन्तुनः। शु.य.३६।१२

## अथपरिधिः

अब परिस्तरणमाथि कनिष्ठिका अथवा अंगुष्ठवरावरमोटो यज्ञिय समिधा कुण्डको तिनतिर पूर्व पश्चिम उत्तरदक्षिण वनाएर तिनवटा परिधी राखी पूर्वपट्टी २वटा आधारसमिधा राख्ने –

त्यसपछि परिधीमाथि परिसेचनगर्ने–

ॐ अदितेऽनुमन्यस्व अग्निको दक्षिणतिर पूर्वाग्र जलधारा दिनु
ॐ अनुमतेऽनुमन्यस्व अग्निको पश्चिमपट्टि उत्तराग्र जलधारा दिनु

ॐ सरस्वतेऽनुमन्यस्व: अग्निको उत्तरतिर पूर्वाग्र जलधारा दिनु

ॐ देवसवित:प्रसुव: अग्निको चारैतिर जलधारा दिनु

## अथ इध्माधानम्

यसरी त्यहाँ स्थापनागरीएका सवै देवताहरुको पूजनगरी , अग्नि प्रज्वलितगरेर **पन्ध्र**वटासमिधालाइ आज्यलेभिजाएर पुष्पाक्षताले पूजागरी आफुपनि अलंकृतभइ अस्मिन् होमकर्मणि भो! ब्रह्मन्निध्माधास्ये भन्दै (आधत्स्व)

यसरी अनुज्ञालिइ उपयमनकुश वायाँहातमालिएरउठी प्रजापतिलाइ मनमा ध्यानगर्दै मौनभइ प्रज्वलितअग्निमा **पन्ध्रसमिधा** हवनगर्ने –

अब श्रुवालेआज्यलिएर–

ॐ प्रजापतये स्वाहा प्रजापतय इदं न मम । नैऋत्यदेखी ईशानसम्म धारालगाइ हवनगरी प्रणीतामा संस्रव राख्ने

ॐ इन्द्राय स्वाहा इन्द्राय इदं न मम। वायव्यदेखी आग्नेयसम्मधारालगाइ हवनगरी प्रणीतामा संस्रव राख्ने

ॐ अग्नये स्वाहा अग्नये इदं न मम । अग्निको दक्षिणतिर हवनगरी प्रणीतामा संस्रव राख्ने

ॐ सोमाय स्वाहा सोमाय इदं न मम । अग्निको उत्तरतिर हवनगरी प्रणीतामा संस्रव राख्ने

## अथ अग्नेर्जिह्वानामभिर्होमः

ईशानमा—ॐ प्रभायै स्वाहा। पूर्वतिर—ॐ दीप्त्यै स्वाहा।

आग्नेयमा—ॐ प्रकाशायै स्वाहा। नैऋत्यमा—ॐ मरीच्यै स्वाहा।

पश्चिममा—ॐ तापिन्यै स्वाहा। वायव्यमा— ॐ करालायै स्वाहा।

उत्तरमा– ॐलेलिहाय स्वाहा। दक्षिणमा–ॐ लेलिहायै स्वाहा।
बीचमा–ॐ लेलिहायै स्वाहा।

**पुष्पाञ्जलिलिई प्रार्थनागर्ने–**

द्विशीर्षकं सप्तहस्तं त्रिपादं सप्तजिह्वकम्।
वरदं शक्तिपाणिञ्च विभ्राणं स्रुक्स्रुवौ तथा॥
स्वाहाञ्च दक्षिणे पार्श्वे वामे देवीं स्वधान्तथा।
रक्तमाल्याम्बरधरमेवमग्निं विचिन्तयेत्॥ इति॥

## अथ पञ्चवारुणिहोमः

१. प्रजापतय इति प्रजापति ऋषिस्त्रिष्टुप्छन्दःप्रजापतिर्देवता आज्यहोमे विनियोगः।

ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम। अग्निमा हवनगरेर सुरोमारहेकोघीउ प्रोक्षणीपात्रमा राख्ने।

यसैगरी सवैतिर अगाडीपनिगर्नु

२. इन्द्रायेति प्रजापति ऋषिस्त्रिष्टुप्छन्दःइन्द्रोदेवता आज्यहोमे विनियोगः।

ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम। अग्निमा हवनगरेर सुरोमारहेको घीउ प्रोक्षणीपात्रमा राख्ने। (यी दुइ आहुति आधारभाग संज्ञकहुन्)

३. अग्नय इति प्रजापति ऋषिस्त्रिष्टुप्छन्दोग्निर्देवता आज्यहोमे विनियोगः।

ॐ अग्नयेस्वाहा इदमग्नये नमम। प्रोक्षणी पात्रमाराख्ने–

४. ॐ सोमायेति प्रजापतिऋषिस्त्रिष्टुप्छन्दःसोमोदेवता आज्यहोमे । विनियोगः।

ॐ सोमाय स्वाहा सोमाय इदं न मम। प्रोक्षणी पात्रमाराख्ने—

५. ॐ महाव्याहृतीनां प्रजापतिऋषिःअग्निवायुसूर्यो देवता गायत्री उष्णिक् अनुष्टप्छन्दांसि अग्न्याधाने विनियोगः ॥

ॐ भूः स्वाहा इदमग्नये न मम । प्रोक्षणी पात्रमाराख्ने—
ॐ भुवः स्वाहा इदं वायवे न मम । प्रोक्षणी पात्रमाराख्ने—
ॐ स्वः स्वाहा इदं सूर्याय न मम। प्रोक्षणी पात्रमाराख्ने—

६. ॐ त्वन्नोअग्नइति वामदेवऋषिःअग्निवरुणौ देवते त्रिष्टुप्छन्दःआज्यहोमे विनियोगः ॥

ॐ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषा गुँ सिप्प्रमुमुग्ध्यस्मत् ॥

शु.य.२१ । ३

ॐ अग्निवरुणाभ्यां स्वाहा अग्निवरुणाभ्यां इदं न मम।

प्रोक्षणी पात्रमाराख्ने—

७. ॐ सत्वन्नअग्न इति वामदेवऋषिःत्रिष्टुप्छन्दः अग्निवरुणौ देवते आज्यहोमे विनियोगः ।

ॐ सत्वन्नोऽअग्ने व्वमोभवोतीनेदिष्ट्ठोऽअस्याऽउषसो व्युष्ट्टौ। अवयक्ष्वनोव्वरुण गूँ रराणोव्वीहिमृडीक गूँ सुहवोनऽएधि ॥ शु.य.२१ । ४

ॐ अग्निवरुणाभ्यां स्वाहा अग्निवरुणाभ्यां इदं न मम ।

प्रोक्षणी पात्रमाराख्ने–

८. ॐ अयाश्चाग्न इति वामदेवऋषिःत्रिष्टुप्छन्दःअग्निर्देवता सर्व प्रायश्चित्त होमे विनियोगः ।

ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्व मयाऽअसि । अयानो यज्ञं वहास्ययानोधेहि भेषज गूँ स्वाहा ॥

ॐ अग्नये स्वाहा अग्नये इदं न मम । प्रोक्षणी पात्रमाराख्ने–

९. ॐ ये ते शतमिति वामदेवऋषिःत्रिष्टुप्छन्दो वरुणःसविता विष्णुर्विश्वेदेवमरुत्स्वर्कादेवताःप्रायश्चित्त होमे विनियोगः ।

ॐ ये तेशतं व्वरुणं ये सहस्रं यज्ञियाःपाशावितता महान्तः । तेभिर्नोऽअद्य सवितोतद्विष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः ॥

ॐ वरुणाय स्वाहा, सवित्रे स्वाहा, विष्णवे स्वाहा, विश्वेभ्योदेवेभ्यःस्वाहा, मरुद्भ्यःस्वाहा, स्वर्केभ्यःस्वाहा ।
इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम ।

१०. ॐ उदुत्तममिति शुनशेपऋषिःत्रिष्टुप्छन्दो वरुणो देवता पाशान्मोचने विनियोगः ।

ॐ उदुत्तमंव्वरुणपाशमस्म्मदवाधमंव्विमध्यम गूँ श्रथाय । अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्याम ॥ शु.य.१२।१२

ॐ वरुणाय स्वाहा वरुणाय इदं न मम ।

यसरी पञ्चवारुणीहोम गरेर **मूलमन्त्रले** १०८पटक हवनगरी पञ्चसूक्तले घीउ चरु हवनगर्ने

# अथ पुरुषसूक्तम्

हरिः ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।

सभूमिं सर्व्वतस्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

पुरुषऽएवेदं सर्व्वंय्यद्भूतं य्यच्च भाव्यम् ।

उतामृतत्वस्येशानो यदन्नेनाति रोहति ॥ २ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

एतावानस्य महिमातो ज्ज्यायाँश्च पूरुषः ।

पादोस्य व्विश्वाभूतानित्त्रिपादस्यामृतन्दिवि ॥ ३ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ।

ततो व्विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥ ४ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

ततोविराडजायतविराजोऽअधिपूरुषः ।

सजातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ।

पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्च ये ॥ ६ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ।

छन्दाᳪसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

तस्मादश्वाऽअजायन्त येकेचोभयादतः ।

गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥८॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

तंयज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्रतः ।

तेन देवाऽअयजन्त साद्ध्याऽऋषयश्च ये ॥ ९ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

यत्पुरुषं व्व्यदधुः कतिधा व्व्यकल्पयन् ।

मुखङ्किमस्यासीत्किम्बाहू किमूरू पादाऽउच्च्येते ॥ १० ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

ब्ब्राह्मणोस्य मुखमासीद्बाहूराजन्न्यः कृतः ।

ऊरूतदस्य यद्वैश्यः पद्भ्याᳪशूद्द्रोऽअजायत ॥ ११ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ।

श्श्रोत्राद्वायुश्चप्प्राणश्च्च मुखादग्निरजायत ॥१२॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

नाब्भ्याऽआसीदन्तरिक्षᳪशीर्ष्णोद्यौःसमवर्त्तत ।

पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँ२ऽ अकल्पयन् ॥ १३ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।

व्वसन्तोस्यासीदाज्ज्यँ ग्रीष्मऽइध्मः शरद्धविः ॥ १५ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ।

देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

यज्ञेनयज्ञमयजन्त देवास्तानि धर्म्माणि प्प्रथमान्यासन् ।

तेहनाकँ महिमानः सचन्त यत्रपूर्व्वेसाद्ध्याःसन्ति देवाः ॥१६॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च व्विश्वकर्म्मणः समवर्त्तताग्रे ।

तस्यत्वष्टा व्विदधद्रूपमेति तन्मर्त्यस्य देवत्त्वमाजानमग्रे ॥ १७ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

व्वेदाहमेतं पुरुषं महान्तमादित्यवर्ण्णन्तमसः परस्तात् ।

तमेव व्विदित्वातिमृत्युमेति नाऽन्यः पन्था व्विद्यतेयनाय ॥ १८ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

प्रजापतिश्चरति गर्ब्भेऽअन्तरजायमानो बहुधाव्विजायते ।

तस्य योनिं परिपश्यन्ति धीरास्तस्मिंन्हतस्त्थुर्भुवनानिविश्वा ॥ १९ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

यो देवेभ्यऽआतपति यो देवानाम्पुरोहितः ।

पूर्व्वो यो देवेभ्यो जातो नमो रुचाय ब्ब्राह्मये ॥ २० ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

रुचम्ब्राह्मञ्जनयन्तो देवाऽअग्रे तदब्रुवन् ।

यस्त्वैवं ब्राह्मणो व्विद्यात्तस्य देवाऽअसन्वशे ॥ २१ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणिरूपमश्विनौ व्व्यात्तम् ।

इष्ष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण ॥ २२ ॥

ॐ पुरुषाय नारायणाय नमः स्वाहा ।

इति पुरुषसूक्तम्

# अथ विष्णुसूक्तम्

ॐ विष्णोर्नुकं वीर्य्याणि प्रवोचं य्यः पार्थिवानि विममेरजाꣳसि ।

योऽअस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥ शु.य. ५।१८

ॐविष्णवे नमः स्वाहा ।

ॐ विष्णोररराटमसि विष्णोःश्नप्त्रेस्थो विष्णोःस्यूरसि विष्णोर्ध्रुवोसि

वैष्णवमसि विष्णवे त्वा ॥२॥ शु.य. ५।२१

ॐविष्णवे नमः स्वाहा ।

तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति ।

उरुक्रमस्य सहिबन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः ॥३॥

ॐविष्णवे नमः स्वाहा ।

प्रतद्विष्णुस्स्तवते वीर्य्येण । मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा ॥४॥ शु.य.५।२०

ॐविष्णवे नमः स्वाहा ।

परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति ।

उभे तें विद्म रजसी पृथिव्या विष्णोर्देवत्वं परमस्यं वित्से ॥५॥

ॐविष्णवे नमः स्वाहा।

विचंक्रमे पृथिवीमेष एताम्। क्षेत्रांय विष्णुर्मनुषे दशस्यन्।

ध्रुवासों अस्य कीरयो जनांसः। ऊरुक्षितिꣳ सुजनिंमाचकार ॥६॥

ॐविष्णवे नमः स्वाहा।

त्रिर्देवः पृथिवीमेष एताम्। विचंक्रमे शतवर्चंसं महित्वा।

प्रविष्णुंरस्तु तवसस्तवीयान्। त्वेषꣳह्यस्य स्थविंरस्य नामं ॥७॥

ॐविष्णवे नमः स्वाहा।

अतों देवा अंवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्तधामंभिः ॥८॥

ॐविष्णवे नमः स्वाहा।

इदंव्विष्णुर्व्विचंक्रमेत्रेधानिदंधे पदम्। समूंढमस्य पाꣳसुरेस्वाहा ॥९॥

ॐविष्णवे नमः स्वाहा। शु.य. ५। १५

त्रीणिंपदा विचंक्रमेव्विष्णुंर्गोपाऽअदांभ्यः। अतो धर्म्माणि धारयंन् ॥१०॥

ॐविष्णवे नमः स्वाहा। शु.य.३४। ४३

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥११॥

ॐ विष्णवे नमः स्वाहा । शु.य. ६ । ४

तद्विष्णोः परमम्पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥१२॥

ॐ विष्णवे नमः स्वाहा । शु.य. ६ । ५

तद्विप्रासो विपन्यवो जागृवां सः समिन्धते । विष्णोर्यत्परमम्पदम् ॥१३॥

ॐ विष्णवे नमः स्वाहा । शु.य.३४ । ४४

॥ इति विष्णुसूक्तम् ॥

# श्रीसूक्तम्

हरिः ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।

चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।

श्रियं देवीमुपह्वये श्रीर्मादेवीजुषताम् ॥३॥ ॐ श्रीं श्रीदेव्यै नमः स्वाहा

कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।

पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।

तां पद्मिनीमीं शरणमहं प्रपद्येऽअलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।

तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्याऽअलक्ष्मीः ॥६॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।

प्रादुर्भूतोऽस्मिंराष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥७॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।

अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ ॐश्रीं श्रीदेव्यै नमः स्वाहा

मनसः काममाकूतिं वाचः सत्यमशीमहि ।

पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

कर्दमेन प्रजाभूता मयि सम्भवकर्दम ।

श्रीयं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।

नि च देवीं मातरꣳश्रियं वासय मे कुले ॥१२॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।

चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥ ॐ श्रीं श्रीदेव्यै नमः स्वाहा

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।

सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।

सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।

विश्वप्रिये विश्वमनोऽनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥१७॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

पद्मानने पद्मऊरू पद्माक्षीं पद्मसम्भवे ।

तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥१८॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

अश्वदायी गोदायी धनदायी महाधने ।

धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥१९॥ ॐ श्रीं श्रीदेव्यै नमः स्वाहा

पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम् ।

प्रजानां भवसि माता आयुष्मन्तं करोतु माम् ॥२०॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।

धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्नुते ॥२१॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।

सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥२२॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।

भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२३॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।

भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥२४॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।

लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥२५॥

ॐ श्रीं श्रीदेव्यै नमः स्वाहा

महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि ।

तन्नो लक्ष्मीः प्रचोदयात् ॥२७॥ ॐश्रीं श्रीदेव्यै नमः स्वाहा

श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।

धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥२८॥

ॐश्रीं श्रीदेव्यै नमः स्वाहा

इति श्रीसूक्तम्

## अथ भूसूक्तम्

ॐ भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा ।

उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ॥१॥

ॐभूं भूदेव्यै नमः स्वाहा

आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुनः । पितरं च प्रयन्त्सुवः ॥२॥

ॐभूं भूदेव्यै नमः स्वाहा

त्रिꣳशद्धाम विराजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वहद्युभिः ॥३॥

ॐभूं भूदेव्यै नमः स्वाहा

अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः ॥४॥

ॐभूं भूदेव्यै नमः स्वाहा

यत्त्वा क्रुद्धः परोवपमन्युना यदवर्त्या ।

सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ॥५॥ ॐभूं भूदेव्यै नमः स्वाहा

यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे ।

आदित्या विश्वे तद्देवा वसंवश्च समाभंरन् ॥६॥ ॐ भूं भूदेव्यै नमः स्वाहा

मेदिनीं देवी वसुन्धंरा स्याद्वसुंधा देवी वासवीं ।

ब्रह्मवर्चसः पिंतृणां श्रोत्रं चक्षुर्मनः ॥७॥ ॐ भूं भूदेव्यै नमः स्वाहा

देवी हिरंण्यगर्भिणी देवी प्रसूवंरीं । सदने सत्यायंने सीद ॥८॥

ॐ भूं भूदेव्यै नमः स्वाहा

समुद्रवंती सावित्री हनो देवी मह्यवी मही ।

धरंणीमहोव्यधिंष्ठा शृङ्गे शृंङ्गे यज्ञे यंज्ञे विभीषिणीं ॥९॥

ॐ भूं भूदेव्यै नमः स्वाहा

इन्द्रंपत्नी व्याजनीं सुरसिह वायुमतीं जलशयंनी ।

श्रियंधाराजा सत्यन्धो परिंमेदिनी श्वोपरिंधत्तङ्गाय ॥१०॥

ॐ भूं भूदेव्यै नमः स्वाहा

विष्णुपत्नीं मंहीं देवीं माधवीं मांधवप्रियाम् ।

लक्ष्मीप्रियसंखीं देवीं नमाम्यच्युंतवल्लभाम् ॥११॥ ॐ भूं भूदेव्यै नमः स्वाहा

ॐ धनुर्धरायै विद्महे सर्वसिद्ध्यै च धीमहि। तन्नो धरा प्रचोदयात् ॥१२॥

ॐ भूं भूदेव्यै नमः स्वाहा

॥ इति भूसूक्तम् ॥

## अथ नीलासूक्तम्

ॐ श्रृण्वन्ति श्रोणाममृतस्यगोपां पुण्यामस्याऽउपश्रृणोमि वाचम् ।
महीं देवीं विष्णुपत्नीमजूर्या प्रतीचीमेनां हविषा यजामः ॥

ॐ नीं नीलादेव्यै नमः स्वाहा ।

ॐ त्रेधा विष्णुरुरुगायो विचक्रमे महीं दिवं पृथिवीमन्तरिक्षम् ।
तच्छ्रोणैति श्रवऽइच्छमाना पुण्यं लोकं यमानाय कृण्वती ॥

ॐ नीं नीलादेव्यै नमः स्वाहा ।

ॐ गृणाहिघृतवतीसवितराधिपत्यै पयस्वतीरन्तिराशानोऽअस्तु ।
ध्रुवादिशां विष्णुपत्न्यघोराऽऽस्येशाना सहसो यामनोतौ ॥

ॐ नीं नीलादेव्यै नमः स्वाहा ।

ॐ बृहस्पतिर्मातरिश्वोत वायुः सन्धुवाना वाताऽअभिनोगृणन्तु ।
विष्टम्भो दिवोधरुणःपृथिव्याऽअस्येशाना जगतो विष्णुपत्नी ॥

ॐ नीं नीलादेव्यै नमः स्वाहा ।

ॐ महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि ।
तन्नो नीला प्रचोदयात् ॥ ॐ नीं नीलादेव्यै नमः स्वाहा ।

॥ इति नीलासूक्तम् ॥

## अथ मध्यमहोमः

कर्मअनुसारको विशेषहवनभएमा त्यसलाइ गर्ने र त्यसैलाइनै मध्यमहोम भनिन्छ जस्तै– श्रीमद्भागवत सप्ताहको हवन मन्त्रपुरश्चरण नामाकरण उपनयन विवाहआदिको हवन । यहाँ समय र शक्तिभएमा विष्णुसहस्रनामलेपनि हवन गर्ने –

## अथोत्तरहोमः

ॐ वाचस्पतिं विश्वकर्माणमूतयेमनोजुवंव्वाजेऽअद्याहुवेम ।
सनो व्विश्वानि हवनानि जोषद्विश्श्वशम्भूरवसे साधुकर्म्मा ।

शु.य.८ । ४५

ॐ सायुधाय सशक्तिकाय सपरिवाराय श्रीमते विष्वक्सेनाय नमः स्वाहा ।

ॐ देवासो येन विधृतेन बाहुना सुदर्शनेन प्रयतास्तमायन् ।
येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति ॥
ॐ सायुधाय सशक्तिकाय सपरिवाराय सुदर्शनाय नमः स्वाहा ।

ॐशेषन्नुतऽइन्द्र सस्मिन्योनौ प्रशस्तये पवीरस्यमह्ना ।
सृजदर्णा स्यवयधुधागास्तिष्ठद्धरी धृषता मृष्टवाजाम् ॥
ॐ सायुधाय सशक्तिकाय सपरिवाराय शेषाय नमः स्वाहा ।

ॐ कि गुँ स्विद्वनङ्कऽउसव्वृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः ।

मनीषिणो मनसापृच्छते दुतद्यदद्ध्यतिष्ठद्भुवनानि धारयन् ॥

ॐ सायुधाय सशक्तिकाय सपरिवाराय अनन्ताय नमः स्वाहा । शु.य.१७ । २०

ॐ सुपर्णं विप्रा कवयो वचोभिरेकंसन्तं बहुधा कल्पयन्ति ।

छन्दा गुँ सि च दधतोऽअध्वरेषु ग्रहान् सोमस्य मिमते द्वादशः ॥

ॐ सायुधाय सशक्तिकाय सपरिवाराय गरुडाय नमः स्वाहा ।

ॐ यज्ञेन यज्ञमयजन्तदेवास्तानिधर्म्माणि प्रथमान्यासन् ।

तेहनाकं महिमानःसचन्तयत्रपूर्व्वे साध्याःसन्ति देवाः ॥ शु.य.३१ । १६

ॐ साध्येभ्यो नमः स्वाहा ॥

ॐ स्वादुष गूँ सदःपितरोव्वयोधाःकृच्छ्रेश्रितःशक्तीवन्तो गभीराः ।

चित्रसेनाऽइषुवलाऽअमृद्धाःसतोवीराऽउरवोव्व्रात साहाः ॥ शु.य.२९ । ४६

ॐ सायुधाय सशक्तिकाय सपरिवाराय हेतये नमः स्वाहा ।

## अथ चतुर्विंशतिनामहोमः

ॐ केशवाय नमः स्वाहा ॐ नारायणाय नमः स्वाहा

ॐ माधवाय नमः स्वाहा ॐ गोविन्दाय नमः स्वाहा

ॐ विष्णवे नमः स्वाहा ॐ मधुसूदनाय नमः स्वाहा

ॐ त्रिविक्रमाय नमःस्वाहा ॐ वामनाय नमः स्वाहा

ॐ श्रीधराय नमः स्वाहा ॐ हृषीकेशाय नमः स्वाहा

ॐ पद्मनाभाय नमः स्वाहा ॐ दामोदराय नमः स्वाहा
ॐ वासुदेवाय नमः स्वाहा ॐ संकर्षणाय नमः स्वाहा
ॐ प्रद्युम्नाय नमः स्वाहा ॐ अनिरुद्धाय नमः स्वाहा
ॐ पुरुषोत्तमाय नमः स्वाहा ॐ अधोक्षजायनमः स्वाहा
ॐ नारसिंहाय नमः स्वाहा ॐ अच्युताय नमः स्वाहा
ॐ जनार्दनाय नमः स्वाहा ॐ उपेन्द्राय नमः स्वाहा
ॐ हरये नमः स्वाहा ॐ श्रीकृष्णाय नमः स्वाहा
ॐ श्रीदेव्यै नमः स्वाहा ॐ भूदेव्यै नमः स्वाहा
ॐ नीलादेव्यै नमः स्वाहा ॐ गोदादेव्यै नमः स्वाहा

## अथ वैकुण्ठपार्षदनामहोमः

ॐ आधारशक्त्यै नमः स्वाहा
ॐ प्रकृत्यै नमः स्वाहा
ॐ अखिलजगदाधाराय कूर्मरूपिणे नारायणाय नमः स्वाहा
ॐ अनन्ताय नागराजाय नमः स्वाहा
ॐ भूम्यै नमः स्वाहा
ॐ वैकुण्ठाय दिव्यलोकाय नमः स्वाहा
ॐ वैकुण्ठाय दिव्यजनपदाय नमः स्वाहा
ॐ वैकुण्ठाय दिव्यनगराय नमः स्वाहा
ॐ वैकुण्ठाय दिव्यविमानाय नमः स्वाहा
ॐ आनन्दमयाय दिव्यमण्डपरत्नाय नमः स्वाहा
ॐ आस्तरणरूपिणे अनन्ताय नागराजाय नमः स्वाहा

ॐ धर्माय पीठपादाय नमः स्वाहा
ॐ ज्ञानाय पीठपाय नमः स्वाहा
ॐ वैराग्याय पीठपादाय नमः स्वाहा
ॐ ऐश्वर्याय पीठपादाय नमः स्वाहा
ॐ ऋग्वेदाय पीठवाहकाय नमः स्वाहा
ॐ यजुर्वेदाय पीठवाहकाय नमः स्वाहा
ॐ सामवेदाय पीठवाहकाय नमः स्वाहा
ॐ अथर्ववेदाय पीठवाहकाय नमः स्वाहा
ॐ अधर्माय पीठगात्राय नमः स्वाहा
ॐ अज्ञानाय पीठगात्राय नमः स्वाहा
ॐ अवैराग्याय पीठगात्राय नमः स्वाहा
ॐ अनैश्वर्याय पीठगात्राय नमः स्वाहा
ॐ एभिःपरिच्छिन्नतनवे पीठभूताय नागराजाय नमःस्वाहा
ॐ पीठस्योपरिअष्टदलपद्मायनमः स्वाहा
ॐ सोममण्डलाय नमः स्वाहा
ॐ सूर्यमण्डलाय नमः स्वाहा
ॐ वह्निमण्डलाय नमः स्वाहा
ॐ विमलायैचामरकरायैनमः स्वाहा
ॐ क्रियायै चामरकरायै नमः स्वाहा
ॐ उत्कर्षिण्यै चामरकरायै नमः स्वाहा
ॐ ज्ञानायै चामरकरायै नमः स्वाहा
ॐ प्रह्वै चामरकरायै नमः स्वाहा
ॐ ईशानायै चामरकरायै नमः स्वाहा

ॐ सत्यायै चामरकरायै नमः स्वाहा
ॐ योगायै चामरकरायै नमः स्वाहा
ॐ अनुग्रहायै चामरकरायै नमः स्वाहा
ॐ जगत्प्रकृतये चामरकराय नमः स्वाहा
ॐ सहस्रशीर्ष्णे अनन्ताय नमः स्वाहा
ॐ पुरतः पादपीठाय नमः स्वाहा
ॐ भगवद्पादुकाभ्यां नमः स्वाहा
ॐ अस्मद्गुरुभ्यो नमः स्वाहा
ॐ अस्मत्परमगुरुभ्यो नमः स्वाहा
ॐ अस्मत्सर्वगुरुभ्यो नमः स्वाहा
ॐ श्रीमते रामानुजाय नमः स्वाहा
ॐ श्रीपरांकुशदासाय नमः स्वाहा
ॐ श्रीमद्यामुनमुनये नमः स्वाहा
ॐ श्रीराममिश्राय नमः स्वाहा
ॐ श्रीपुण्डरीकाक्षाय नमः स्वाहा
ॐ श्रीमन्नाथमुनये नमः स्वाहा
ॐ श्रीमते शठकोपाय नमः स्वाहा
ॐ श्रीमतेविष्वक्सेनाय नमः स्वाहा
ॐ श्रियै नमः स्वाहा
ॐ श्रीधराय नमः स्वाहा
ॐ सुदर्शनायहेतिराजायनमः स्वाहा
ॐ पाञ्चजन्यायशंखाधिपतयेनमः स्वाहा
ॐ कौमोदक्यैगदाधिपतयेनमः स्वाहा

ॐ नन्दकायखड्गाधिपतयेनमः स्वाहा
ॐ शार्ङ्गायचापाधिपतयेनमः स्वाहा
ॐ श्रीवत्सायश्रीनिवासायनमः स्वाहा
ॐ कौस्तुभायसर्वरत्नाधिपतयेनमः स्वाहा
ॐ वैजयन्त्यैवनमालायैनमः स्वाहा
ॐ ह्रीं पुष्ट्यै नमः स्वाहा
ॐ ऐ सरस्वत्यै नमः स्वाहा
ॐ द्रां निद्रायै नमः स्वाहा
ॐ क्लीं कान्त्यै नमः स्वाहा
ॐ कं पृथिव्यै नमः स्वाहा
ॐ गं गरुडाय नमः स्वाहा
ॐ किरीटाय मुकुटाधिपतये नमः स्वाहा
ॐ मकराकृतिकुण्डलाभ्यां नमः स्वाहा
ॐ कण्ठिकाभरणाय नमः स्वाहा
ॐ किरीटमालायै आपीडात्मिकायै नमःस्वाहा
ॐ श्रीमत्तुलस्यै नमः स्वाहा
ॐ हाराय सर्वाभरणाधिपतये नमः स्वाहा
ॐ काञ्चीगुणोज्वलाय पीताम्बरायनमः स्वाहा
ॐ सर्वेभ्यो भगवद्भूषणेभ्यो नमः स्वाहा
ॐ सर्वेभ्यो भगवद्दिव्यायुधेभ्यो नमः स्वाहा
ॐ सर्वाभ्यो भगवत्पादसंवाहिनीभ्यो नमः स्वाहा
ॐ सर्वेभ्यो भगवत्परिकरेभ्यो नमः स्वाहा
ॐ अनन्ताय नमः स्वाहा

ॐ विष्वक्सेनाय नमः स्वाहा
ॐ सूत्रवत्यै नमः स्वाहा
ॐ जं जयत्सेनाय नमः स्वाहा
ॐ गं गजाननाय नमः स्वाहा
ॐ हं हयाननाय नमः स्वाहा
ॐ कं कालप्रकृतिसंज्ञाय नमः स्वाहा
ॐ सर्वेभ्यो विष्वक्सेनपरिजनेभ्यो नमः स्वाहा
ॐ चन्डाय नमः स्वाहा
ॐ प्रचन्डाय नमः स्वाहा
ॐ भद्राय नमः स्वाहा
ॐ सुभद्राय नमः स्वाहा
ॐ जयाय नमः स्वाहा
ॐ विजयाय नमः स्वाहा
ॐ धात्रे नमः स्वाहा
ॐ विधात्रे नमः स्वाहा
ॐ कुमुदायसायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ कुमुदाक्षाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ पुण्डरीकाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ वामनाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ शंकुकर्णाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ सर्पनेत्राय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ सुमुखाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा
ॐ सुप्रतिष्ठिताय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ सर्वेभ्यो भगवद्गणाधिपतिभ्यो नमः स्वाहा
ॐ नित्येभ्यो नमः स्वाहा
ॐ मुक्तेभ्यो नमः स्वाहा
ॐ दिव्येभ्यो नमः स्वाहा
ॐ समस्तपरिवाराय श्रीमते नारायणाय नमः स्वाहा

## अथ अष्टवसुहोमः

ॐसुगावो देवाःसदनाऽअकर्म्मयऽआजग्मेद गूँ सवनञ्जुषाणाः । भरमाणाव्वहमानाहवी गुँ ष्यस्म्मेधत्तवसवोव्वसूनिस्स्वाहा ।

शु.य. ८।१८

ॐ अष्टवसुभ्यो नमः स्वाहा

## दिग्द्वारपालहोमः

ॐ त्रातारमिन्द्रमवितारमिन्द्र गूँ हवेहवेसुहव गूँ शूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूतमिन्द्र गूँ स्वस्तिनोमघवाधात्विन्द्रः ॥

शु.य. २० । ५०

ॐ इन्द्राय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा ।

ॐत्वन्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठा यजिष्ठोवह्नितमगूँशोशुचानोविश्वाद्वेषागुँसिप्रमुमुग्ध्यस्मत् ॥

शु.य. २१ । ३

ॐअग्नये सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा ।

ॐ अद्यादेवाऽउदितासूर्य्यस्यनिर गूँ हसःपिपृतानिरवद्यात् । तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥

शु.य. ३३ । ४२

ॐ सूर्याय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा ॥

ॐ सुगन्नः पन्थाऽअभयं कृणोतु यस्मिन्नक्षत्रे यमराजातिराजा ।
यस्मिन्नेनमभिषिञ्चन्तिदेवास्तदस्य चित्र गूँ हविषा यजामः ॥

ॐयमाय सशक्तिकाय भगवत्पार्षदाय नमःस्वाहा

ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्न्विहितस्क्करस्य ।
अन्न्यमस्मदिच्छसातऽइत्यानमो देवि निर्ऋते तुब्भ्यमस्तु ॥

शु.य. १२ । ६२

ॐ निर्ऋतये सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा

ॐ तन्मित्रस्यव्वरुणस्याभिचक्षे सूर्य्योरूपंकृणुते द्यौरुपस्थे ।
अनन्तमन्यद्द्रुशदस्यपाजःकृष्णमन्यद्धरितःसम्भरन्ति ॥ शु.य. ३३ । ३८

ॐ अनन्ताय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा

ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेय्यजमानो हविर्ब्भिः ।
अहेडमानोव्वरुणेहबोद्ध्युरुष गूँ समानऽआयुः प्रमोषीः ॥ शु.य.२१ । २

ॐ वरुणाय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा

ॐ आनोनियुद्भिःशतिनीभिरद्धर गूँ सहस्रिणीभिरुपयाहियज्ञम् ।
वायोऽअस्मिन्न्त्सवनेमादयस्वयूयम्पातस्वस्त्तिभिःसदा नः ।

शु.य.२७ । २८

ॐ वायवे सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा

ॐ राजाधिराजायप्रशह्यशायिने नमो वयं वैश्रवणायकुर्महे ।
स मे कामान्कामकामायमह्यं कामेश्वरो वैश्रवणो ददातु ॥

ॐ वैश्रवणाय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा ॥

ॐ सोमोधेनु गूँ सोमोऽअर्व्वन्तमाशु गूँ सोमोव्वीरङ्कर्मण्यन्ददाति ।
सादन्यंविदत्थ्य गूँ सभेयम्पितृश्श्रवणंय्योददाशदस्मै ॥ शु.य.२७ । २८

ॐ सोमाय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा ।

ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमयेव्वयम् ।
पूषानो यथा व्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥

ॐ ईशानाय सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा । शु.य.२५ । १८

ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोव्वेनऽआवः ।
सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ।

ॐ ब्रह्मणे सशक्तिकाय भगवत्पार्षदाय नमः स्वाहा । शु.य.१३ । ३

## अथ प्रायश्चित्तहोमः ।

अब हातमा जल अक्षताआदिलिएर सङ्कल्पगर्ने—

ॐ अस्य अमुककर्माङ्गहोमकर्मणःमध्ये संभवन्मन्त्रविधि विपर्यासन्यूनातिरिक्तस्वराक्षरव्यत्यासप्रायश्चितार्थमाहुतीर्होष्यामि ।

यसरी संकल्पगरी श्रुवाद्वाराआज्यलिई हवनगर्ने —

ॐ अनाज्ञातं यदज्ञातं यज्ञस्यक्रियते मिथुः ।
अग्नेतदस्यकल्पयत्व गूँ हि वेत्थयथातथम् ॥

ॐ अग्नये स्वाहा । अग्नये इदं न मम ।

ॐ पुरुषसम्मितो यज्ञो यज्ञःपुरुष सम्मितः ।
अग्नेतदस्य कल्पयत्व गूँ हि वेत्थयथातथम् ॥

ॐ अग्नये स्वाहा । अग्नये इदं न मम ।

ॐ यदविद्वासो यद्विद्वांसो मुग्धाः कुर्वन्ति ऋत्विजः ।
अग्निर्म्मातस्म्मादेनसः श्रद्धा देवी च मुञ्चताम् ॥

ॐ अग्नये श्रद्धादेव्यै च स्वाहा । अग्नये श्रद्धादेव्यै इदं न मम ।

अब सेतोतिल र आज्यद्वारा १०८पटक हवन गर्ने –

ॐ त्र्यम्बकं ष्यजामहे सुगन्धिम्पुष्टिवर्धनम् ।
ऊर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥ शु.य.३ । ६०

ॐ त्र्यम्बकाय नमः स्वाहा । त्र्यम्बकाय इदं न मम ।

अब आज्यले १०८पटक हवन गर्ने –

ॐ इदंव्विष्णुर्व्विचक्रमेत्रेधानिदधे पदम् ।
समूढमस्यपा गूँ सुरेस्वाहा । शु.य.५ । १५

ॐ विष्णवे नमः स्वाहा । विष्णवे इदं न मम ।

यसपछि घीउलेमात्र हवनगर्ने –

ॐ स्वस्तिदा विशस्यति वृत्रहाविमृधो वशी ।
वर्षेन्द्रःपुरऽएतुनःस्वस्तिदाऽअभयङ्करः ॥

ॐ इन्द्राय अभयङ्कराय स्वाहा । इन्द्राय इदं न मम ।

ॐ पुनस्त्वादित्त्यारुद्द्रावसवःसमिन्धताम्पुनर्ब्ब्रह्माणो वसुनीथ यज्ञैः । घृतेनत्वन्तन्न्वंवर्द्धयस्वसत्त्याःसन्तु यजमानस्य कामाः ॥

शु.य.१२ । ४४

ॐ अग्नयेवसुनीताय स्वाहा । अग्नये वसुनीताय इदं न मम ।

# अथ स्वीष्टकृद्धोमः

ॐ यदस्य कर्मणोऽअत्यरीरिचं यद्वान्यूनमिहाकरम् ।
अग्निष्टुत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु ॥

ॐ अग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृते इदं न मम ।

ॐ भूः स्वाहा अग्नये इदं न मम । प्रोक्षणी पात्रमाराख्ने—

ॐ भुवः स्वाहा वायवे इदं न मम । प्रोक्षणी पात्रमाराख्ने—

ॐ स्वः स्वाहा सूर्याय इदं न मम । प्रोक्षणी पात्रमाराख्ने—

ॐ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ।
यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषा गुँ सिप्रमुमुग्ध्यस्मत् ॥

शु.य.२१ । ३

ॐ अग्निवरुणाभ्यां स्वाहा । अग्निवरुणाभ्यां इदं न मम ।

प्रोक्षणी पात्रमाराख्ने—

ॐ सत्वन्नोऽअग्ने व्वमोभवोतीनेदिष्ट्ठोऽअस्याऽउषसो व्युष्ट्टौ ।
अवयक्ष्वनोव्वरुण गूँ रराणोव्वीहिमृडीक गूँ सुहवोनऽएधि ॥

शु.य.२१ । ४

ॐ अग्निवरुणाभ्यां स्वाहा । अग्निवरुणाभ्यां इदं न मम ।

प्रोक्षणी पात्रमाराख्ने—

ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्व मयाऽअसि ।
अयानो यज्ञं वहास्ययानोधेहि भेषज गूँ स्वाहा ॥

ॐ अग्नये स्वाहा । अग्नये इदं न मम । प्रोक्षणी पात्रमाराख्ने—

ॐ ये तेशतं व्वरुणं ये सहस्रं यज्ञियाःपाशावितता महान्तः ।
तेभिर्नोऽअद्य सवितोतद्विष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्काः ॥

ॐ वरुणाय स्वाहा। सवित्रे स्वाहा, विष्णवे स्वाहा, विश्वेभ्योदेवेभ्यःस्वाहा, मरुद्भ्यःस्वाहा, स्वर्केभ्यःस्वाहा।
इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम।

ॐ उदुत्तमंव्वरुणपाशमस्म्मदवाधमंव्विमध्यम गुं श्रथाय।
अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्याम॥ शु.य.१२।१२

ॐ आदित्यायादितये स्वाहा। आदित्यायादितये इदं न मम।

## अथ कर्मसाद्गुण्यहोमः

ॐ केशवाय स्वाहा
ॐ नारायणाय स्वाहा
ॐ माधवाय स्वाहा
ॐ गोविन्दाय स्वाहा
ॐ विष्णवे स्वाहा
ॐ मधुसूदनाय स्वाहा
ॐ त्रिविक्रमाय स्वाहा
ॐ वामनाय स्वाहा
ॐ श्रीधराय स्वाहा
ॐ हृषीकेशाय स्वाहा
ॐ पद्मनाभाय स्वाहा
ॐ दामोदराय स्वाहा
ॐ वासुदेवाय स्वाहा
ॐ सङ्कर्षणाय स्वाहा
ॐ प्रद्युम्नाय स्वाहा
ॐ अनिरुद्धाय स्वाहा
ॐ पुरुषोत्तमाय स्वाहा
ॐ अधोक्षजाय स्वाहा
ॐ नारसिंहाय स्वाहा
ॐ अच्युताय स्वाहा
ॐ जनार्दनाय स्वाहा
ॐ उपेन्द्राय स्वाहा
ॐ हरये स्वाहा
ॐ श्रीकृष्णाय स्वाहा

## अथ पूर्णाहुतिः

स्रुवाले स्रुक्मा चारपटक आज्यभरेर त्यसमा ताम्बूल सुपारी श्रीफल (नरिवल) राखी नयाँवस्त्रद्वाराआच्छादनपछी रङ्गीनधागालेवेष्टितगरी पुनःआज्यलेभिजाएर पुष्पादिले अलंकृतगराई उठेर मनमा यज्ञपुरुष लाई ध्यानगरी पूर्णाहुती गर्ने–

ॐ यत्तेदेवा अदधुर्भागधेयममावास्ये सं वसन्तो महित्वा ।
सा नो यज्ञं पिपृहि विश्वावरेण्यं नो धेहि सुभगे सुवीरम् ॥ भ.प्रतिष्ठा.

ॐ अग्नये पूर्णाय सप्तवते स्वाहा

ॐ पूर्णःपश्चादुत पूर्णःपुरस्तादुन्मध्यतःपौर्णमासी जिगाय ।
तस्यादेवाअधि संवसन्त उत्तमेनाक इह मादयन्ताम् ॥ भ.प्रतिष्ठा.

ॐ अग्नये पूर्णाय सप्तवते स्वाहा

ॐ सप्तते अग्ने समिधःसप्तजिह्वाःसप्तऋषयःसप्तधामप्प्रियाणि ।
सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेन ॥ शु.य.१७ । ७९

ॐ अग्नये पूर्णाय सप्तवते स्वाहा । अग्नये पूर्णाय सप्तवते इदं न मम

यसरी पूर्णाहुतिगरी प्रणीताकोजलले परिषेचनगर्ने–

## अथ उत्तरपरिषेचनम्

जलपूर्णभएकोप्रणीतापात्र दाहिनेहातमालिएर–

ॐ अदितेऽन्व मग्गुँस्थाः अग्निको दक्षिणतिर पूर्वाग्र जलधारा दिनु

ॐ अनुमतेन्व मग्गुँस्थाः अग्निको पश्चिमपट्टि उत्तराग्र जलधारा दिनु

ॐ सरस्वतेन्व मग्गुँस्थाः अग्निको उत्तरतिर पूर्वाग्र जलधारा दिनु

ॐ देवसवितःप्रासावीः पूर्वादिक्रमलेअग्निको चारैतिर जलधारा दिनु

प्रणीतापात्र आफ्ना अगाडिराखेर त्यहाँ

ॐ सदसि सन्मे भूयाःसर्वमसि सर्वं मे भूयाः ।
पूर्णमसि पूर्णं मे भूयाःअक्षतमसि मामेक्षेष्टाः ॥

यस मन्त्रले प्रणीतापात्रमा अरु जल राखी त्यो जल दुवै हातमालिएर

ॐ देवाऋषयोमार्जयन्ताम् । पूर्वतिर थोरै जल छोड्ने अथवा (कुशले प्रोक्षणगर्ने ) । यसैगरी

ॐ मासापितरो मार्जयन्ताम् । दक्षिणतिर थोरै जल छोड्ने ।

ॐ गृहाःपशवो मार्जयन्ताम् । पश्चिमपट्टी थोरै जल छोड्ने ।

ॐ आप ओषधयो वनस्पतयो मार्जयन्ताम् । उत्तरतिर केहिजल छोड्ने ।

ॐ यज्ञःसंवत्सरो यज्ञपतिर्मार्जयन्ताम् । मास्तिर केहि जल छिटा दिने र

आफ्नाअगाडी द्रव्यसहित केहीजल भूमीमा छोडिदिने र अवशिष्ट जलले तलको मन्त्रद्वारा आफूलाईपनि प्रोक्षण गर्ने–

ॐ सुमित्त्रियानऽआपओषधयःसन्तु । यसरी प्रोक्षणगरेर

ॐ दुर्म्मित्त्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्म्मः ॥

शु.य.३५ । १२

यसरी प्रणीतापात्रलाई घोप्ट्याइदिने –

## अथ दिक्पालबलिः

मण्डपको चारैदिशामा पूर्वादि क्रमले बलि दिने ।

पूर्वतिर–ॐआद्याश्च कर्मजाश्चैव ये भूताःप्राक् दिशिस्थिताः ।
प्रसन्नाःपरितुष्टाश्च गृह्णन्तु बलिमुत्तमम् ॥

दक्षिणतिर–ॐ वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः ।
भूमौ व्योम्नि स्थिता ये च गृह्णन्तुबलिमुत्तमम् ॥

पश्चिमतिर– ॐ विनायकाःक्षेत्रपाला ये चान्ये बलिकांक्षिणः ।

पूषाद्याःपार्षदाश्चैव प्रतिगृह्णन्तु ते बलिम् ॥

उत्तरतिर– ॐ कुमुदाद्याश्च ये भूताः सर्वतो दिक्षु संस्थिताः ।

आगच्छन्तु च ते सर्वे गृह्णन्तु बलिमुत्तमम् ॥

अब ब्रह्मा (ब्राह्मण)लाई **पूर्णपात्र** समर्पणगर्ने–

ॐपूर्णमदःपूर्णमिदं पूर्णात् पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐअद्य पूर्वोच्चारित सङ्कल्पपरिद्धिरस्तु– अमुक गोत्रोत्पन्नः अमुक प्रवरान्वितः अमुक (शर्मा , वर्मा ,गुप्त दासोऽहं ) भगवदाज्ञया भगवतोमुखकमलविकासार्थं भगवत्कैङ्कर्यरूपेण कृतस्य न्यूनातिरिक्त परिपूर्णार्थं अमुककर्माङ्गभूतहोमकर्मणि कृताकृतवेक्षण रूपब्रह्मकर्म प्रतिष्ठासिद्ध्यर्थमपूर्णपूरणार्थमिदं तण्डुलपुरितपूर्णपात्रं प्रजापतिदैवतं यथानामदैवतं यथानामगोत्राय यथानामशर्मणे (ब्रह्मणे) वा ब्राह्मणाय तुभ्यमहं सम्प्रददे । ॐतत्सन्नमम ।

अब पूर्वोक्तप्रकारले **गोदान** गर्ने

**दक्षिणासङ्कल्प–**

अब दक्षिणाकोलागि **द्रव्य** आदि, दुना अथवा टपरीमाराखी यसमन्त्रले पूजागर्ने–

ॐहिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतःशान्तिं प्रयच्छ मे ॥

ॐअद्य पूर्वोच्चारित सङ्कल्पपरिद्धिरस्तु– अमुक गोत्रोत्पन्नः अमुक प्रवरान्वितः अमुक (शर्मा , वर्मा ,गुप्त दासोऽहं ) भगवदाज्ञया भगवन्मुखकमलविकासार्थं भगवत्कैङ्कर्यरूपेण

कृतस्य न्यूनातिरिक्त परिपूर्णार्थं अमुककर्माङ्गभूतहोमकर्मणि कृताकृतवेक्षण रूपब्रह्मकर्मप्रतिष्ठासिद्ध्यर्थमिमां **द्रव्यदक्षिणां** यथानामदैवतं भगवदादिभ्यः नानानामगोत्रेभ्यः जपपाठहवनादि नानाकर्मकर्तृभ्यः नानानामशर्मभ्यः सुपूजितेभ्यो ब्राह्मणेभ्यो तथा कन्या कुमारीभ्यश्च यथाभागंविभज्य दातुमहमुत्सृजे। ॐतत्सन्नमम।

अब विशेषआरतीगर्ने–

## आरती

श्रितकमला मुखमण्डल धृतकुण्डल ए।
कलितललितवनमाल जय जयदेव हरे॥ श्रितकमला...।
दिनमणिमण्डलमण्डन भवखण्डन ए।
मुनिजनमानसहंस जय जयदेव हरे॥ श्रितकमला...।
कालियविषधरगञ्जन जनरञ्जन ए।
यदुकुलनलिनदिनेश जय जयदेव हरे॥ श्रितकमला...।
मधुमुरनरकविनाशन गरुडासन ए।
सुरकुलकेलिनिदान जय जयदेव हरे॥ श्रितकमला...।
अमलकमलदललोचन भवमोचन ए।
त्रिभुवनभवननिदान जय जयदेव हरे॥ श्रितकमला...।
जनकसुताकृतभूषण जित दूषण ए।
समरशमितदशकण्ठ जय जयदेव हरे॥ श्रितकमला...।
अभिनवजलधरसुन्दर धृतमन्दर ए
श्रीमुखचन्द्रचकोर जय जयदेव हरे॥ श्रितकमला...।
तव चरणे प्रणता वयमिति भावय ए।
कुरु कुशलं प्रणतेषु जय जयदेव हरे॥ श्रितकमला...।

श्रीजयदेव कवेरिदं कुरुते मुदम् ।
मङ्गलमुज्वलगीतं जय जयदेव हरे ॥ श्रितकमला ... ।

## पुष्पाञ्जली

अब पुष्पाञ्जलि लिएर प्रार्थना गर्ने–

हरिः ॐतद्विष्णोःपरमम्पद गूँ सदा पश्यन्ति सूरयः ।
दिवीवचक्षुराततम् । शु.य. ६ । ५

तद्विप्प्रासोव्विपन्यवोजागृवा गुँ सःसमिन्धते ।
विष्णोर्य्यत्परमं पदम् । शु.य.३४ । ४४

पर्याप्त्याऽनन्तरायाय सर्वस्तोमोतिराशत्र उत्तममहर्भवति
सर्वस्याप्त्यै सर्वस्यजित्यै सर्वमेव तेनाप्नोति सर्वं जयति ।
हरिः ॐ शान्तिः ३ ॥

ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ।
ॐ महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि ।
तन्नो लक्ष्मीप्रचोदयात् ॥

सुगन्धवल्लीशतपत्रजातीसुवर्णचम्पावकुलोद्भवानि ।

गृहाण देवेश मयार्पितानि प्रभो हरे श्रीतुलसीदलानि ॥

पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरुन् ।

रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥

सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान् ।

लोकविक्रान्तचरणौ शरणं ते व्रजं विभो ॥

त्वमेव माता च पिता त्वमेव , त्वमेव बन्धुश्च गुरुस्त्वमेव ।

त्वमेव विद्या द्रविणं त्वमेव , त्वमेव सर्वं मम देवदेव ॥

पिताऽसि लोकस्य चराचरस्य , त्वमस्य पूज्यश्च गुरुर्गरीयान् ।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो , लोकत्रयेऽप्यप्रतिमप्रभाव ॥

तस्मात्प्रणम्य प्रणिधाय कायं , प्रसादये त्वामहमीशमीड्यम् ।

पितेव पुत्रस्य सखेव सख्युः , प्रियः प्रियायार्हसि देव सोढुम् ॥

मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरण–कृत्याकरण–भगवद्–अपचार भागवतापचारासह्यापचाररूप–नानाविधानन्तापचारान्–आरब्धकार्यान्–अनारब्धकार्यान्– कृतान्–क्रियमाणान् करिष्यमाणांश्च सर्वान् अशेषतः क्षमस्व ॥

अनादिकालप्रवृत्तविपरीतज्ञानम् आत्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ।

मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूतं 'शरणागतोऽस्मि तवास्मि दासः' इति वक्तारं मां तारय ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१॥

उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥२॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ।।३।।
इति श्लोकत्रयोदितज्ञानिनं मां कुरूष्व ॥

पुरुषःस परःपार्थ भक्त्या लभ्यस्त्वनन्यया ।
भक्त्यात्वनन्यया शक्यःमद्भक्तिं लभते पराम् ॥
इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व । श. ग.ग.

ॐ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन् ।
तेह नाकम्महिमानःसचन्त यत्र पूर्व्वेसाध्याः सन्ति देवाः ॥
शु.य.३ । १६

कायेनवाचा मनसेन्द्रियैर्वा , बुद्ध्यात्मना वा प्रकृतेःस्वभावात् ।
करोमियद्यत्सकलं परस्मै , नारायणायेति समर्पयेतत् ॥
यसरी मन्त्रपुष्पाञ्जलिगरेर चन्दनपुष्प आदिले **ब्रह्मा**को पूजागर्ने–

ॐब्रह्मणे नमः भनि ब्रह्मालाई पूजागरेर तल वताइएका मन्त्रपढ्दै ब्रह्मविसर्जन गर्ने–

स्तुता मया वरदो वेदमाता प्रचोदयन्ति पवनेद्विजाताः ।
आयुःपृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रयातु ब्रह्मलोकम् ॥

भगवन् देवदेवेश जगतामार्तिनाशन ।
व्रजस्व पूजामादाय पुनरागमनाय च ॥

ॐयज्ञयज्ञङ्गच्छयज्ञपतिङ्गच्छ स्वांय्योनिङ्गच्छ स्वाहा ।
एषतेयज्ञोयज्ञपतेसहसूक्तवाकःसर्व्ववीरस्तञ्जुषस्व स्वाहा ॥
शु.य.८ । २२

## अथ परिधिहोमः

अब परिधी आधारसमिधा र पस्तिरणकुशहरुलिएर –

ॐ समुद्रं वःप्रहिणोमि स्वां योनिमभिगच्छत ।
अरिष्टास्माकं वीरा मापरासे चिमत्पयः ॥

यस मन्त्रद्वारा अग्निमा राखिदिने

अब हातजोडेर प्रार्थनागर्ने–

ॐ अग्नेनय सुपथारायेऽअस्मान्विश्श्वानि देववयुनानिव्विद्वान् ।
युयोद्ध्यस्म्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं व्विधेमस्वाहा ॥

शु.य.७ । ४३

ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
यद्धूतं च मया देव परिपूर्णं तदस्तु ते ॥

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि च ।
यानि तेषामशेषेणां कृष्णानुस्मरणं परम् ॥

यस्यस्मृत्या च नामोक्त्या जपहोमकृयादिषु ।
न्यूनं सम्पूर्णतां याति सद्योवन्देतमच्युतम् ॥

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णस्यादिति श्रुतिः ॥

अब हातमा जलअक्षतालिएर –

यथाशक्तिकृतेन अनेन होमकर्मणा यज्ञस्वरूपी श्रीमन्नारायणः परमात्मा प्रीयताम् । भनी जल अक्षता भूमीमा रखिदिने –

त्यसपछि होमगर्नेसमयमा **होता** एवं **ऋत्वि**ककाहातवाट कुण्डदेखिवाहिर जुन हवि झरेकोछ त्यो सवै उठाएर शुद्धजलमा अथवा नदीमा राखिदिने –

ऋत्विजां जुह्वतां वह्नौ बहिःपततियद्धविः ।
स ज्ञेयो वारुणोभागःप्रक्षेप्यो विमले जले ॥

यसरी स्मरणगर्ने । त्यसपछि ब्राह्मणभोजन गराउने ।

यदि विशेषकार्य केहीभएमा तीर्थ, नदीआदिमा गएरस्नानगर्ने , विशेष नभएमा पूर्णकुम्भकोजलले यजमानलाई ब्राह्मणहरुले अभिषेक गरिदिने–

ॐ द्यौःशान्तिरन्तरिक्ष गूँ शान्तिःपृथिवी शान्तिरापःशान्ति रोषधयः शान्तिः । व्वनस्प्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिः सर्व गूँ शान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि । शु.य.३६ । १७

ॐ शन्नोमित्रः शंव्वरुणः । शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्मवदिष्यामि ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु अवतु मां । अवतु वक्तारम् ।

ॐ शन्नोमित्रः शंव्वरुणः । शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मवादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥

ॐ सह नाववतु। सह नौ भुनक्तु। सहवीर्यङ्करवावहै।
तेजस्विनावधीतमस्तु। माविद्विषावहै।ॐ शान्तिःशान्तिः शान्तिः॥

अब ब्राह्मणहरुले जितन्तेस्तोत्र, मङ्गलाष्टकद्वारा आशीर्वाद दिने–

ॐ जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापूरुष पूर्वज॥
श्रीकान्ताकुचकुम्भकुंकुमपरिरम्भोगुणानां निधिः
पूर्वाचार्यगुणावबोधनकर श्रीपाञ्चरात्रागमः॥
विष्वक्सेनविभीषणप्रभृतिभिःभक्तैस्सदा सेवितः
पायाद्वोभगवान् पुराणपुरुषःकुर्याद् सदा मङ्गलम्॥१॥

श्रीरामानुजभट्टरार्यशठकोपानन्तसङ्कर्षणैः
श्रीसौदर्शनपाञ्चजन्यभरताचार्यादि सद्वैष्णवैः।
वेदैश्शास्त्रपुराणवैष्णवकथालापैःसदा सेवितः
पायाद्वोभगवान् पुराणपुरुषःकुर्याद् सदा मङ्गलम्॥२॥
प्रासादध्वजदण्डमण्डपमहासौवर्णपीठोन्नतः
प्राकाराञ्चितहेमरत्नमणिभिःजाज्वल्यमानो हरिः।
नित्यं नित्यमहोत्सवं बहुविधं मासं च पक्षोत्सवं
पायाद्वोभगवान् पुराणपुरुषःकुर्यात् सदा मङ्गलम्॥३॥
नानावेदपुराणशास्त्रविभवःश्रीपाञ्चरात्रागमः
शास्त्राणामधिपस्समस्तफलदःश्रीवैष्णवैः शाश्वतैः।
भक्तैःभागवतैरमर्त्यनिकरैरासेव्यमानोत्सुकः
पायाद्वोभगवान् पुराणपुरुषः कुर्यात् सदा मङ्गलम्॥ ४॥

विश्वामित्रपराशरशुकमुनिप्रह्लादरुमाङ्गदाः
भारद्वाजवशिष्ठनीलहनुमान् श्रीवैनतेयादयः ।
एतैर्भागवतोत्तमैः प्रतिदिनं संसेव्यमानोत्सुकः
पायाद्वोभगवान् पुराणपुरुषः कुर्यात् सदा मङ्गलम् ॥ ५ ॥

मीनो वामनसूकरौ नरमृगो कूर्मो महाभार्गवो
रामो यादवनायको रतिसखः कृष्णश्च कल्क्यादयः ।
लोकानां परिपालनाय जगतो देवो जगद्रक्षकः
पायाद्वोभगवान् पुराणपुरुषःकुर्यात् सदा मङ्गलम् ॥ ६॥

श्रीरङ्गे गरुडाचले खगगिरौ सिंहाचले मन्दिरे
वैकुण्ठे कनकाचले च निमिषे नारायणाख्याचले ।
लोकालोकमहाचले च निषधे पुण्याचलेष्टाश्रयः
पायाद्वोभगवान् पुराणपुरुषः कुर्याद् सदा मङ्गलम् ॥७॥

श्रीलक्ष्मीकमलालयावसुमती रामा जगद्रक्षिणी
कल्याणी सकलेश्वरी हरिसती भाग्यानुसन्धायिनी ।
शोभाङ्गी विमलेक्षणी विमलिनी नारायणीभिर्युतः ।
पायाद्वोभगवान् पुराणपुरुषः कुर्यात् सदा मङ्गलम् ॥८॥

इति उभयवेदान्तविशारदनैपालरुरुक्षेत्राश्रमस्वामी श्रीपरांकुशाचार्यवर्य संग्रथिता
श्रीवैष्णवीय हवनपद्धति समाप्ता

# अथ परिशिष्टम्

**प्रमाणप्रकरणम्—**

चक्रादिचिह्नरहितेन स्थापितेस्थाने हरिर्नायाति—

चक्रादि चिह्नहीनेन स्थापिते यत्र विग्रहे।
न सान्निध्यं हरिर्याति क्रियाकोटिशतैरपि॥

शङ्खचक्रादि चिह्नशून्येन द्विजेन कृतं सर्वं सत्कर्म महाहानिप्रदं भवति—

शङ्खचक्रोर्ध्वपुण्ड्रादि चिह्नेन रहितै द्विजैः।

यद्यत्कर्मकृतं तत्तु महाहानिप्रदं भवेत्॥

विप्राणां सकामानामकामानां च चतुरस्रं कुण्डं कर्तव्यम्—
विप्राणां चतुरस्त्रं तु मखे निष्कामकामयोः

पाञ्चरात्रेकुण्डशरीरम्—

प्राच्यां शिरःसमाख्यातं बाहू दक्षिणसौम्ययोः।

उदरं कुण्डमित्युक्तं योनिःपादौ तु पश्चिमे॥

पाञ्चरात्रे पाद्मे कुण्डाङ्गलक्षणम्—

तदैन्द्रीमेखलापादौ भुजौ तु दक्षिणोत्तरे।
पश्चिमा पृष्ठमित्युक्तं शिरस्तद्योनिरुच्यते॥

कुम्भस्तु तस्यवक्त्रं स्यादक्षतं गण्डमेव च।
तत्पुष्पं दृष्टिरित्युक्तं तदग्रं वक्षरुच्यते॥

तल्लेपनं मृदम्भःस्यादिन्धनं चास्थिसंज्ञितम् ।
आज्यं रुधिरमेवोक्तं तद्गन्धो वस्त्रमुच्यते ॥

अनलं प्राणमेवोक्तं तज्ज्वालामुखजिविका ।

दर्भास्तुकेशा इत्युक्ता परिधि हुरुच्यते ॥

मुमुक्षूणां वैष्णवानां चतुरस्रं कुण्डम्—

मुमुक्षूणां वैष्णवानां चतुरस्रं प्रकीर्तितम् ॥

पाञ्चरात्रे—पुत्रेष्ट्यै तु चतुर्वर्णानामपि योनिकुण्डम्—

पुत्रार्थं तु चतुर्णां वै योनिकुण्डं प्रकीर्तितम् ।

एवं शान्तिकर्मणि वर्तुलम्, वृष्ट्यर्थं पद्माकृतिं, रोगनाशाय च अष्टास्त्रं कुण्डं परिकल्पयेत् ।

पूजान्ते होमः कर्तव्य—

पूजान्ते सर्वदा होमो ब्राह्मणस्य विधीयते ।
होमान्ते पितृयागः स्यात् प्रद्युम्नादिधिया द्विजाः ॥

वैष्णवेष्टिश्च कर्तव्या ह्याज्ञेयं परमात्मनः ।
कुर्यान्नचेदधोयाति नारायणपराङ्मुखः ॥

विप्राणां शास्त्रज्ञानमावश्यकम्—

श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।

एकेन विकलःकाणो द्वाभ्यामन्धःप्रकीर्तितः ॥

ऋतुकाले नारीणां सप्ताहादेव देवपितृकार्येधिकारः—

ऋतुकाले च नारीणां त्यजेद्दिनचतुष्टयम् ।

तावन्नालोकयेद्वक्त्रं पापं वपुषि संस्थितम् ॥
स्नात्वा सचैलं सा नारी चतुर्थेऽहनि शुध्यति ।
सप्ताहात् पितृदेवानां भवेद्योग्या व्रतार्चने ॥

होमयज्ञःसर्वैः कार्यः—

अग्नौ यद्धूयते हव्यं विष्णवे परमात्मने ॥
तदग्नौ वैष्णवं प्रोक्तं सर्वदेवोपजीवनम् ॥

एतदेव हि कुर्वन्ति सदा नित्या अपीश्वराः ।

विमुक्ता अपि भोगार्थमेतदेव मुमुक्षवः ॥

योगक्षेमार्थेऽपि होमयज्ञःकर्तव्यमेव—

अन्नाद्भवन्तिभूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञकर्मसमुद्भवः ॥

कर्मब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥

अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठे ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्न ततःप्रजाः ॥

अग्निहोत्रं विना न तुष्यति हरिः—

एतद्विना न तुष्येत भगवान् पुरुषोत्तमः ।

यज्ञस्वरुपं ज्ञात्वैव जुहुयात् न चेत्पतेत् —

वह्निर्जिह्वा भगवतो वेदा अङ्गाः सदाध्वरे ।
अस्थीनि समिधःप्रोक्ता रोमादर्भाः प्रकीर्तिता ॥

स्वाहाकारः शिरः प्रोक्तं प्राणा एव हवींषि च ।
सर्ववेद क्रियाभोगा मन्त्राः पत्न्यः प्रकीर्तिताः ॥

एवं यज्ञवपुर्विष्णुर्विदित्वैनं हुताशने ।
जुहुयाद्वै पुरोडासमज्ञात्वैनं पतेदधः ॥

अग्निहोत्रशून्यस्य, उभयलोकशून्यत्वम्—

नायं लोकोस्त्ययज्ञस्य कथं स्यात् परतः शुभः ।

होमादिकर्म भगवद्कैंकर्यरूपेणैव कुर्यात्—

हरेर्भोगतया कुर्यात् न साधनतया क्वचित् ॥

हरेरङ्गरूपेण वैदिकदेवतान्तराराधने देवतान्तरशङ्का न कार्या—

देवतान्तर शङ्का तु न कर्तव्या हि वैदिकैः ।

अक्षतास्वरूप—

तण्डुलाःसहरिद्रास्तु अक्षता इति कीर्तिताः ॥

तर्पणे प्रमाणम्—

आदौ नाम द्वितीयान्तं तर्पयामितिचोच्चरन् ।
एष मन्त्रस्तु निर्दिष्टस्तर्पणेषु यथाक्रमम् ॥

देवाग्नि गुरुसन्निधानान्निर्गमनप्रकारः—

पश्चाद्भागेन निर्गच्छेद्देवाग्निगुरुसन्निधौ ।

कुण्डमानम्—

होमे साष्टशते चैव मुष्ट्यरत्निसमं भवेत् ।
होमे सार्धशते चैव सारत्निः सकनिष्ठिका ॥

हस्तं सहस्रहोमे तु अयुताख्ये द्विहस्तकम् ।
लक्षहोमे चतुर्हस्तं कोटिहोमेष्टहस्तकम् ॥

केवलभूमौ नाग्निश्चेतव्यः—

भूमौ अग्निर्न चेतव्यः इति श्रुतेः । भूमा इत्यस्य केवलायां भूमावित्यर्थः ।

पाकादौ कञ्चुकनिषेधः—

कञ्चुकेन समं यस्तु पाककर्म समाचरेत् ।
तदन्नं श्वानविष्टास्यात् न भक्ष्यन्तद्विजातिभिः ।

तप्ताङ्कन —मुख्यकालः—

जाते पुत्रे पिता स्नात्वा होमं कुर्याद्विधानतः ।
तेनाग्निनैव संतप्तचक्रेण भुजमूलयोः ।

अङ्कयित्वाशिशोःपश्चान्नामकुर्याच्च वैष्णवम् ।
पश्चात्सर्वाणि कर्माणि कुर्वीतास्य विधानतः ॥

अङ्कयित्वा न चक्रेण यत्किञ्चित्कर्म सञ्चरेत् ।
तत्सर्वं याति वैबल्यमिष्टापूर्तादिकं नृप ॥

कारयेन्मन्त्रदीक्षायां चक्राद्याःपञ्चहेतयः ।
चक्रं वै कर्मसिद्ध्यर्थम् जातकर्मणि कारयेत् ॥
एवमेतद्ग्रन्थाधारभूतप्रमाणानि सत्शास्त्रेषुपलभ्यन्ते । विस्तरभयान्नाधिकमिहतन्यते ।

## वैष्णवेष्टिविधानम्

गुरूणामन्त्यदिवसे भगवज्जन्मवासरे ।
कार्तिक्यांश्रावणे वाऽपिकुर्यादिष्टिं च वैष्णवीम् ॥

उपोष्य पूर्वदिवसे दीक्षितः सुसमाहितः ।
स्वस्तिवाचनपूर्वेण कारयेदङ्कुरार्पणम् ॥

नद्यां स्नात्वा च ऋत्विग्भिश्चतुर्भिर्वेदपारगैः ।
पौरुषेण विधानेन पूजयेत्पुरुषोत्तमम् ॥

गन्धैर्नानाविधैः पुष्पैर्धूपदीपैर्निवेदनैः ।
फलैश्च भक्ष्यभोज्यैश्च ताम्बूलाद्यैः प्रपूजयेत् ॥

ऋग्वेदसंहितायाश्च प्रत्यृचं कुसुमैर्यजेत् ।
अर्घ्याद्यैरुपचारैस्तु सूक्तान्ते पूजयेद्धरिम् ॥

अध्यायान्ते मण्डलान्ते नैवेद्यैर्विविधैरपि ।
पूजयित्वा हरिं भक्त्या वैष्णवान्भोजयेत्तथा ॥

आज्येन चरुणा वाऽपि तिलैःपद्मैरथाऽपि वा ।
समिद्भिर्विल्वपत्रैर्वा होमं कुर्वीत वैष्णवः ॥

यज्ञरूपं हरिं ध्यायन्प्रत्यृचं वेदसंहिताम् ।
होमःसमाप्यते यावत्तावद्वै दीक्षितो भवेत् ॥

जुहुयाद्वै गार्हपत्ये सोग्निमभ्यर्च्य भूतले ।
अग्ने रक्षणमप्युक्तं यावदिष्टः समाप्यते ॥

विशिष्टान्वैष्णवान्प्रियान् भोजयेत्प्रतिवासरम् ।
ऋत्विजश्च पठेत्तावच्चतुर्मन्त्रान्समाहितः ॥

अन्ते सम्पूजयेद्विप्रान् वासोलङ्कारभूषणैः ।
ऋत्विजश्च गुरूञ्चैव पूजयेच्च विशेषतः ॥

एवमिष्टिं तु यः कुर्याद्वैष्णवीं वैष्णवोत्तमः ।
क्रतुनां दशकोटीनां फलं प्राप्नोत्यसंशयम् ॥

यस्मिन्देशे वैष्णवेष्ट्या पूजितो मधुसूदनः ।
दुर्भिक्षरोगाग्निभयं तस्मिन्नास्ति न संशयः ॥

अशक्तः सर्ववेदेन कर्तुमिष्टिं च वैष्णवीम् ।
सर्वैश्च वैष्णवैःसूक्तैर्जुहुयात्प्रत्यृचं हविः ॥

पुष्पाञ्जलिञ्चतैरेव कुर्यादिष्ट्या प्रपूर्तये ।
अथवा मूलमन्त्रेण लक्ष्यं जप्त्वा हुताशने ॥

अयुतं जुहुयात्तद्वत्पुष्पाणि च सनातने ।
इष्टिः सम्पूर्णतां याति सर्ववेदाः सदक्षिणाः ॥

एवमिष्टिं प्रकुर्वीत प्रत्यब्दं वैष्णवोत्तमः ।
वृद्ध्यर्थमपि लोकस्य देवतानां हिताय च ॥

अथ वक्ष्यामि राजर्षेःवैष्णवेष्ट्या विधिं ततः ।
श्रवणर्क्षे तु पूर्वाह्ने पूर्ववच्च समारभेत् ॥

उपोष्य पूर्वदिवसे पूजयेज्जागरे हरिम् ।
प्रभाते पूर्ववत्स्नात्वा तर्पयेज्जगतां पतिम् ॥

षडक्षरविधानेन परव्योम्निस्थितं हरिम् ।
वह्न्यर्कसोमविम्वाद्यैर्योगपीठे सुसंस्थितम् ॥

चतुर्भुजं सुन्दराङ्गं सर्वाभरणभूषितम् ।
शङ्खचक्रगदाशार्ङ्गान् विभ्राणं दोर्भिरायतैः ॥

वामाङ्कस्थश्रिया सार्द्धं गन्धपुष्पाक्षतादिभिः ।
नैवेद्यैश्च फलैर्भक्ष्यैर्दिव्यैर्भोज्यैः सुपानकैः ॥

अर्चयेद्देवदेवेशं सर्वाभरणसंयुतम् ।
श्रीर्लक्ष्मीःकमला पद्मा सीता सत्या च रुक्मिणी ॥

सावित्री परितः पूज्या ततस्तु विमलादयः ।
अनन्तताक्ष्र्यसेनेशसत्यधर्मदमाःशमाः ॥

बुद्धिश्च पूजनीयास्ते दिक्षु सर्वास्वनुक्रमात् ।
ततो लोकेश्वराः पूज्यास्ततश्चक्रादिहेतयः ॥

महाभागवताःपूज्या होमकर्म समाचरेत् ।
चतुर्भिर्वैष्णवैःसूक्तैः प्रत्यृचं जुहुयाच्चरुम् ॥

व्यापका मन्त्ररत्नं च चतुर्मन्त्रा उदाहृताः ।
तैरप्यष्टोत्तरशतं पृथक्पृथगतो यजेत् ॥

तृतीयमण्डलं पश्चाज्जुहुयात्प्रत्यृचं तथा ।
तथा पुष्पैश्च सम्पूज्य कुर्यादवभृथं ततः ॥

समाप्य पुष्पयोगेन वैष्णवान्भोजयेत्ततः ।
एवं कर्तुमशक्तश्चेद्वैष्णवीं वैष्णवोत्तमः ॥

वैष्णव्या चैव गायत्र्या पुष्पाञ्जल्ययुतं चरेत् ।
त्रिसहस्रं चरुं हुत्वा वैष्णवेष्ट्या फलं लभेत् ॥

इमां तु वैष्णवीमिष्टं यः कुर्याद्वैष्णवोत्तमः ।
त्रिकोटिकुलमुद्धृत्य याति विष्णोः परं पदम् ॥

प्राश्चित्तमिदंकुर्याद् वृत्तिभङ्गेषु वैष्णवः ।
शान्त्यर्थ देवकार्येषु पापेषु च महत्स्वपि ॥

श्रीमन्नारायण संहितोक्त प्रकारेण वैभवेष्ट्यङ्गभूत पिण्डदान विधिः ॥

कुम्भस्य दक्षिणे पार्श्वे गोमयालिप्त भूतले ।
त्रिकोणमण्डलं कृत्वा वृत्तं वा साधकोत्तमः ॥

दक्षिणाग्रान् कुशान्न्यस्य तेषु कुम्भं निवेशयेत् ।
माषान्नं तिलसम्मिश्रं मध्वाज्य दधि संयुतम् ॥

क्षीरयुक्तं च षट्पिण्डान् कारयित्वा विनिक्षिपेत् ।
पिता पितामहश्चैव प्रपितामह एव च ॥

सपत्निकानिमाँश्चोक्त्वा गोत्रनामादिभिः क्रमात् ।
बदरीफलमात्राणि दद्यात् पिण्डानि देशिकः ॥

येन श्राद्धं कृतं बह्मन् तं विद्यादनिरुद्धकम् ।
प्रद्युम्नं च ततो विद्यात् सङ्कर्षणमतः परम् ॥

वासुदेवं च तत्पश्चात् प्रपितामहमर्चयेत् ।
कुम्भोदकेन तान् पिण्डान् अष्टाक्षरविधानतः ॥

सम्प्रोक्ष्य पूजयेत् बह्मन् कुशाक्षततिलैस्तथा ।
गन्धपुष्पाम्बराद्यैश्च दीपधूपादिकैः शुभैः ॥

पायसं भक्ष्यसंयुक्तं विनिवेद्य यथाक्रमान् ।
सौदर्शनाख्यमन्त्रेण पाञ्चजन्यस्य विद्यया ॥

अभिमन्त्र्य तदा पिण्डान् पञ्चसंस्कारसिद्धये ।
ऊर्ध्वपुण्ड्रानि कुर्वीत आज्येसिक्त्वा कुशद्वयम् ॥

सूचना —यो पुस्तकमा आवश्यकतालाइ मध्यनजरगरि विद्वान हरूको आशयबुझेर पूर्वसंस्करणको भन्दा कतिपयविषय बढाइएकोछ सबै विज्ञ भागवतवृन्दहरूले थपिएको विषय अनावश्यक भन्ने ठहराएको खण्डमा सूचना दिनुहुन सविनय निवेदनगरिन्छ। अर्कासंस्करणमा हटाइने प्रयास गरिनेछ।

इति शुभम्

गोविन्ददास विराट नगर ।

अनुवादक— रामानुजाचार्य "वशिष्ठ"